वरदराजप्रणीता

# सिद्धान्तकौमुदी

विषमस्थलटिप्पण्यादिभिः समुल्लसिता

श्रीमदिन्दिराकान्तचरणान्तेवासिना
रायण राम आचार्य 'काव्यतीर्थ'
इत्यनेन संशोधिता

यसागर-मुद्रणालयम्, मुंबई २

वरदराजप्रणीता

# मध्यसिद्धान्तकौमुदी

विषमस्थलटिप्पण्यादिसमुल्लसिता

●

श्रीमदिन्दिराकान्तचरणान्तेवासिना
नारायण राम आचार्य 'काव्यतीर्थ'
इत्यनेन संशोधिता

सप्तमं संस्करणम् १९५०

निर्णयसागर-मुद्रणालयम्, मुंबई २

मूल्यं ३ रूप्यकाः

# भूमिका

ॐनमः श्री ६ गुरुचरणारविन्दाभ्याम्

एवं किलोपाख्यायते—'पुरा किल भगवान्पाणिनिराचार्यो बाल्ये वयसि वर्तमानो भगवन्तमुपवर्षनामानमाचार्यं स्कन्दप्रसादसमासादितव्याकरणप्रभावनिरस्तसमस्ताज्ञानमुपासांचक्रे। तत्र चिरपरिचर्यारतस्याप्यस्य शुभोदर्कयापि तत्कालं कुटिलयेव गम्यमानयार्वाग्दशां लोकातिगोत्कर्षभूमानमाधास्यन्त्या नियत्यावरुद्धप्रसरः सामन्त इव चक्रवर्त्युचिते पीठे विमलतरव्याकरणप्रभवेऽस्य चेतस्यलब्धावकाशो गुरूपदेशो रुषेवास्य मन्दमतितां शिष्यगणे प्राचारयत्, कदाचिदयमात्मसतीर्थ्येन वररुचिना सकृच्छ्रुतग्राहिणोपवर्षशिष्याग्रसरेणोपहसितो नितरामन्तर्दूयमानो निखिलविद्याप्रभवं भगवन्तमुमाकान्तमेवैकान्ततोऽज्ञाननाशायाराधयिष्य इति कृतमतिर्हिमवन्तं नगोत्तमं प्रातिष्ठत। अस्मिन्नेव काले सनकादयोऽपि समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमद्वितीयमात्मतत्त्वं प्रत्यक्षीकर्तुकामाः सुदीर्घे तपसि वर्तमाना आसन्। पाणिनिरपि हिमवन्तमासाद्य दुश्चरेण तपसा समस्तलोकशंकरं शंकरं प्रासादयत्। अथ भगवान्महेश्वरो भक्तकल्पद्रुः सुचिरं दुश्चरं तपश्चरतां विभिन्नकामानामपि तेषामभिमतमेकेनैव यत्नेन युगपत्पूरयितुकामो डमरुवादनव्याजेन चतुर्दशसूत्रीमुपदिदेश। यां किलाक्षरसमाम्नायं ब्रह्मराशिमित्याचक्षते। ब्रह्मप्रतिपादकोऽक्षरराशिरिति तस्यार्थः। तत्त्वं च नन्दिकेश्वरकृतकाशिकायां द्रष्टव्यम्। तत्र सर्वत्र सूत्रेष्वन्त्यं वर्णचतुर्दशं शब्दशास्त्रप्रवृत्तिरूपपाणिनीष्टसिद्ध्यर्थं समुपदिष्टम्। ततो महेश्वरानुग्रहेण समधिगताखिलविद्यामुखः पाणिनिर्वररुचिं वादायाहूय माहेश्वरेण बलेन वादसंग्रामशिरसि निर्जिगाय। ततो वररुचिरपि भगवन्तं महेश्वरं मूर्श तपसा प्रसाद्य सर्वमपि पाणिनीयमध्यगच्छत्। भगवदादेशेन च तत्र वार्तिकमपि

## ४२ प्रत्याहाराणामकारादिक्रमेण परिसंख्यानम्

| | | | | | |
|---|---|---|---|---|---|
| १ अक् | ८ अश् | १५ ऐच् | २२ जश् | २९ भष् | ३६ रल् |
| २ अच् | ९ इक् | १६ खय् | २३ झय् | ३० मय् | ३७ वल् |
| ३ अञ् | १० इच् | १७ खर् | २४ झर् | ३१ यञ् | ३८ वश् |
| ४ अट् | ११ इण् | १८ ङम् | २५ झल् | ३२ यण् | ३९ शर् |
| ५ अण् | १२ उक् | १९ चय् | २६ झश् | ३३ यम् | ४० शल् |
| ६ अम् | १३ एङ् | २० चर् | २७ झष् | ३४ यय् | ४१ हल् |
| ७ अल् | १४ एच् | २१ छव् | २८ बश् | ३५ यर् | ४२ हश् |

## — द्विचत्वारिंशत्प्रत्याहारविवरणम् —



अक्=अ, इ, उ, ऋ, ऌ.

अच्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ.

अञ्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ,

अट्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र.

अण्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल.

अम्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न.

अल्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह.

अश्=अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द.

इक्=इ, उ, ऋ, ऌ.
इच्=इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ.
इण्=इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल.
उक्=उ, ऋ, ऌ.
एङ्=ए, ओ.
एच्=ए, ओ, ऐ, औ.
ऐच्=ऐ, औ.
खय्=ख, फ, छ, ठ, थ, च, ट, त, क, प.
खर्=ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स.
ङम्=ङ, ण, न.
चय्=च, ट, त, क, प.
चर्=च, ट, त, क, प, श, ष, स.
छव्=छ, ठ, थ, थ, च, ट, त.
जश्=ज, ब, ग, ड, द.
झय्=झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प.
झर्=झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स.
झल्=झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह.
झश्=झ, भ, घ, ढ, ध, ज, ब, ग, ड, द.
झष्=झ, भ, घ, ढ, ध.
बश्=ब, ग, ड, द.
भष्=भ, घ, ढ, ध.
मय्=म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प.
यञ्=य, व, र, ल, ञ, म, ङ, ण, न, झ, भ.
यण्=य, व, र, ल.

यम्=य, व, र, ल, ञ, म, ङ, ण, न.
यय्=य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग,
द, ख, फ, छ, ठ, थ, च, ट, त, क, प.
यर्=य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड,
द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स.
रल्=र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द,
ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह.
वल्=व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड,
द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह.
वश्=व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द.
शर्=श, ष, स.
शल्=श, ष, स, ह.
हल्=ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब,
ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह.
हश्=ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज,
ब, ग, ड, द.

---

## अचामष्टादशभेदविवरणम्

| अ इ उ ऋ ऌ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ ऌ ए ओ ऐ औ |
|---|---|---|
| ह्रस्वभेदाः । | दीर्घभेदाः । | प्लुतभेदाः । |
| १ उदात्तानुनासिकः | ७ उदात्तानुनासिकः | १३ उदात्तानुनासिकः |
| २ उदात्ताननुनासिकः | ८ उदात्ताननुनासिकः | १४ उदात्ताननुनासिकः |
| ३ अनुदात्तानुनासिकः | ९ अनुदात्तानुनासिकः | १५ अनुदात्तानुनासिकः |
| ४ अनुदात्ताननुनासिकः | १० अनुदात्ताननुनासिकः | १६ अनुदात्ताननुनासिकः |
| ५ स्वरितानुनासिकः | ११ स्वरितानुनासिकः | १७ स्वरितानुनासिकः |
| ६ स्वरिताननुनासिकः | १२ स्वरिताननुनासिकः | १८ स्वरिताननुनासिकः |

# आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं कोष्टकम्

| आभ्यन्तर-प्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | | विवृताः | संवृतः |
|---|---|---|---|---|---|---|---|---|
| संज्ञाः | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | | स्वराः उदात्तानुदात्तस्वरिताः | |
| व्यञ्जनानि स्वराश्च | क ख | ग ङ | घ | य | | | अ इ ए | ह्रस्वः प्रयोगे अ. |
| | प फ | ब म | भ | व | श | | उ ओ | |
| | च छ | ज ञ | झ | र | ष | | ऋ ऐ | |
| | ट ठ | ड ण | ढ | ल | स ह | | ऌ औ | |
| | त थ | द न | ध | | | | | |
| बाह्यप्रयत्नाः | अ. प्रा. म. प्रा. विवारः श्वासः अघोषः | अल्प.प्रा. संवारः नादः घोषः | म.प्रा. संवारः नादः घोषः | अल्प. संवारः नादः घोषः | म. विवारः श्वासः अघोषः | प्रा. सं. ना. घो. | अल्पप्राणः संवारः नादः घोषः | अल्प. संवारः नादः घोषः |

# वर्णोद्भवस्थानकोष्टकम्

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ<br>क<br>ख<br>ग<br>घ<br>ङ<br>ह<br>: | इ<br>च<br>छ<br>ज<br>झ<br>ञ<br>य<br>श | ऋ<br>ट<br>ठ<br>ड<br>ढ<br>ण<br>र<br>ष | ऌ<br>त<br>थ<br>द<br>ध<br>न<br>ल<br>स | उ<br>प<br>फ<br>ब<br>भ<br>म<br>ᳵप | ञ<br>म<br>ङ<br>ण<br>न | ए<br>ऐ | ओ<br>औ | व | ᳲक | ं<br>अनु. |
| कंठः | तालु | मूर्धा | दंताः | ओष्ठौ | नासिका | कं ता. | कं. ओ. | दं. ओ. | जि. मू. | नासिका |

श्रीवरदराजविरचिता

# मध्यसिद्धान्तकौमुदी

नत्वा[1] वरदराजः श्रीगुरून्[2] भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां[3] मध्यसिद्धान्तकौमुदीम्[4] ॥ १ ॥

अइउण्[5] १ ऋलृक् २ एओङ्[6] ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४ इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि[7] ॥ हकारादिष्वकार[8] उच्चारणार्थः । लण्मध्ये[9] त्वित्सं-

---

टिप्प०-१ मत्तस्त्वमुत्कृष्टः, त्वत्तोऽहमपकृष्ट इत्याकारकज्ञानजनककरतलशिरःसंयोगानुकूलो व्यापारो नतिः, क्त्वाप्रत्ययार्थस्तदुत्तरकालिकत्वं तत्समानकर्तृकत्वं च। तथा च तादृशनमस्कारोत्तरा नमस्कारसमानकर्तृका च या मध्यसिद्धान्तकौमुदीविषयिणी कृतिस्तदाश्रयो ग्रन्थकर्तेति बोधः पर्यवस्यति । २ 'नास्ति तत्त्वं गुरोः परम्' इत्याद्युक्त्या गुरोरेव परमपदार्थत्वाद्गुरूनित्युक्तम् । ३ पाणिनिना प्रोक्तं पाणिनीयं, तदधीते विदन्ति वा पाणिनीयास्तेषाम् । ४ मध्यसिद्धान्तकौमुदीमिति । अत्यल्पाऽशेषाभ्यामन्ये मध्यभूताः सिद्धान्तास्तेषां प्रकाशिकाम् । ५ णांदीनामनुबन्धः अणादिसंज्ञार्थः । ननु सवर्णयोरनयोः पृथग्ग्रहणं किमर्थम् ? नह्यकारादीनां सवर्णा उक्ता इति चेत्,- तयोः सावर्ण्यस्यानित्यत्वज्ञापनार्थमेवैतत् । तेन क्लृ २ प्तशिख इत्यत्र अनृत इति निषेधो न भवतीति । केचित्तु वार्तिकमदृष्ट्वा सूत्रकृतोऽप्रवृत्तेः पृथग्ग्रहणमित्याहुः । अन्ये त्वकारादिस्वराणां चादिषु पाठात् 'चादयोऽसत्त्वे' इति निपातसंज्ञायां 'निपात एकाच्' इति प्रगृह्यते प्रकृतिभावान्न संधिरित्याहुः । ६ वर्णानामसंदिग्धत्वेन बोधाय संहितायां अविवक्षणादेतेषु न संधिरिति बोध्यम् । ७ अण् आदिर्यासां ता अणादयः, अणादयश्च ताः संज्ञाश्चेत्यणादिसंज्ञाः, अणादिसंज्ञाभ्य इमानीत्यस्वपदविग्रहः । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति नित्यसमासत्वात् । ८ हयवरट् इत्यादिषु । ९ उपदेशेऽजनुनासिक इदित्यनेन ।

ज्ञकः ॥ हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता । अर्हेणा[1]धुक्षे[2]दित्यत्र द्वयं सिद्धं भविष्यति ॥ **[3]हलन्त्यम्** ।१।३।३। उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम्[4] । सूत्रेष्वदृष्टं पदं [5]सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥ **अदर्शनं लोपः** ।१।१।६०। [6]प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥ **तस्य लोपः** ।१।३।९। तस्येतो लोपः स्यात् । णा[7]दयोऽणाद्यर्थाः ॥ **आदिरन्त्येन सहेता** ।१।१।७१। अन्त्येनेता सहिता आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्; यथा—अण् इति अइउवर्णानां संज्ञा । एवमच्, हल्, अल्, इत्यादयः ॥ **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** ।१।२।२७। उश्च ऊश्च ऊ३श्च वः[8] । वां[9] काल[10] इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुत-संज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ **उच्चैरुदात्तः** ।१।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ॥ **नीचैरनुदात्तः** ।१।२।३०। ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ॥ **समाहारः स्वरितः** ।१।२।३१। उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात् । स[11] नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ **मुखनासिका[12]वचनोऽनुनासिकः** ।१।१।८। मुखसहितनासिकयोच्चार्य-माणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येक-मष्टादश भेदाः । ऌवर्णस्य द्वादश; तस्य दीर्घाभावात् । एचामपि द्वादश; तेषां

---

टिप्प०—१ अर्हेणेत्यादावड्व्यवायेऽपि णत्वार्थमटि पाठः । २ अधुक्षदित्यादौ 'शल इगुपधात्' इत्यनेन च्लेः क्सादेशः । ३ हलि अन्त्यमित्येव विग्रहः सुवचः । ४ आद्याः शंकरपाणिन्यादयस्तैः कृतं डमरुमुखादिद्वारोच्चारणम् । ५ अष्टाध्याय्यां पूर्वपठितादन्यसूत्रात् । उपलक्षणमेतत् । क्वचिदपकर्षोऽपि बोध्यः । ६ शास्त्रतोऽर्थतो वा विद्यमानस्य । ७ अइउण् ऋऌक् इत्यादिष्वन्त्या ण् क् इत्यादयः 'अण्' अक् इत्यादिप्रत्याहारार्थाः । ८ उकारत्रयस्य सवर्णदीर्घे कृते जसि परतो यणि वः इति रूपम् । ९ ह्रस्वदीर्घप्लुतानां पूर्वोक्तानामुकारत्रयाणाम् । १० उच्चारणकाल इव उच्चारणकालो यस्येत्याशयः । ११ ह्रस्वादिभेदेन उदात्तादिभेदेन चोक्तः । १२ उच्यतेऽनेनेति वचनं, मुखनासिका वचनमस्येति विग्रहः । मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यात् ।

ह्रस्वाभावात् ॥ **तुल्यास्य[1]प्रयत्नं सवर्णम्** ।१।१।९। ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। (ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्)। अकु[2]हविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। ए[3]दैतोः कण्ठतालु। ओदौतोः कण्ठौष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य। इति स्थानानि ॥ ॥ यत्नो द्विधा—आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा—स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शा[4]नाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रि[5]यादशायां तु विवृतमेव। बा[6]ह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवारा[7]ः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा [8]यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो [9]मावसानाः स्पर्शाः। यणोऽन्तस्थाः। शल ऊष्माणः। अचः स्वराः। ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः। ≍प≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाप्रत्ययः** ।१।१।६९। अविधीय[10]मानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् [11]परेण णकारेण। कुचुटुतुपु एते उदितः। तदेवं अ इत्यष्टा-

---

टिप्प०–१ आस्ये भवमास्यम्, आस्यं च प्रयत्नश्चास्यप्रयत्नौ, तुल्यौ सदृशौ आस्यप्रयत्नौ यस्य। २ कु इति क ख ग घ ङ ग्राह्याः। ३ अत्र तपरकरणमसंदेहार्थं, तेन प्लुतस्यापि संग्रहः स्यात्। ४ कादयो मावसानाः स्पर्शा इति वक्ष्यमाणानाम्। ५ व्याकरणरीत्या शब्दसिद्धिपर्यन्तम्। ६ वर्णोत्पत्तेः पश्चाज्जातः। ७ विवारप्रयत्नवन्तः। ८ एवमुत्तरत्रापि। यण्प्रत्याहारान्तर्वर्तिनः। ९ लोकप्रसिद्ध्यपेक्षमिदम्। १० विधीयतेऽसौ विधीयमानः, तथा न भवतीत्यविधीयमानः। तेन दाशरथिरित्यत्र 'अत इञ्' इत्यनेन त्रिमात्र ईकारो न भवतीति वेदितव्यम्। ११ अत्र 'ऋत उत्' इति सूत्रं लिङ्गम्। यदि हि पूर्वेण स्यात् तदा ऋकारस्योकारस्य च सवर्णग्राहकत्वात्तपरकरणं व्यर्थं स्यात्।

दशानां संज्ञा । तथैकारोकारौ । ऋकारस्त्रिंशतः । एवं ऌकारोऽपि । एचो द्वादशानाम् । अनुनासिकानननुनासिकभेदेन यवला द्विधा । तेनाननु[1]नासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ **परः संनिकर्षः संहिता** ।१।४।१०९। वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् ॥ **हलोऽनन्तराः संयोगः**[2] ।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ **सुप्तिङन्तं पदम्** ।१।४।१४। सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ इति **संध्युपयोगि संज्ञाप्रकरणम्** ॥ १ ॥

## अथाचसंधिप्रकरणम् ।

**इको यणचि** ।६।१।७७। इकः स्थाने[3] यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥ **तस्मिन्निति निर्दिष्टे[4] पूर्वस्य** ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य ज्ञेयम् ॥ **स्थाने[5]ऽन्तरतमः** ।१।१।५०। प्रसङ्गे[6] सति सदृशतम[7] आदेशः स्यात् । सुध् य् उपास्य इति जाते ॥ **अनचि च** ।८।४।४७। अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धस्य द्वित्वम् ॥ **झलां जश् झशि** ।८।४।५३। झलां जश् स्यात् झशि परे । इति पूर्वधस्य दः ॥ **संयोगान्तस्य लोपः** ।८।२।२३। संयोगान्तं यत्पदं तस्य लोपः स्यात् ॥ **अलोऽन्त्यस्य** ।१।१।५२। षष्ठी[8] निर्दिष्टोऽन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते । (यणः प्रतिषेधो वाच्यः) । सुद्ध्युपास्यः, मद्ध्वरिः । धात्त्रंशः । लाकृतिः ॥ **एचोऽयवायावः** ।६।१।७८। एचः क्रमात् अय्, अव्, आय्, आव्, एते

---

टिप्प०–१ ये त्वक्षरसमाम्नायिका अणस्त एव सवर्णानां ग्राहका भवन्ति । एवं च रेफहकारौ न कस्यापि ग्राहकौ भवतः । तत्सवर्णस्यान्यस्याभावादित्यवसेयम् । २ अल्पाक्षरसंज्ञायां कर्तव्यायां महासंज्ञाकरणमन्वर्थसंज्ञापनार्थं । संयुज्यन्ते वर्णा अस्मिन्समुदाय इति । तत्फलं तु समुदाये संज्ञापर्याप्तिः ननु गुणादिवत्प्रत्येकम् । तेन दृषद्भिर्मतीत्यादौ संयोगान्तलोपो न भवतीति ज्ञेयम् । ३ 'षष्ठीस्थाने योगा' इत्यनेन इकः स्थाने इत्यर्थो भवति । ४ निर् इत्यस्य नैरन्तर्यमर्थः । दिशिरत्रोच्चारणार्थकः । तेनायमर्थः–अचि यण् भवतीत्युक्ते व्यवहितेऽव्यवहितेऽप्यचि प्राप्तेऽव्यवहित एवेति नियम्यते । ५ 'षष्ठी' इत्यनुवृत्त्या यत्र स्थाने षष्ठी तत्रैवेदं बोध्यम् । ६ प्रसङ्गः शास्त्रप्रसक्तिः । ७ अर्थात्प्रमाणानां मध्ये इत्यर्थो भवति । ८ स्थानषष्ठीनिर्दिष्टस्य य आदेश उच्यते सोऽन्त्यस्यालः स्थाने भवतीति ।

स्युरचि ॥ **यथासंख्यमनुदेशः समानाम्[1]** ।१।३।१०। समसंबन्धी विधिर्यथासंख्यं स्यात्। हरये। विष्णवे। नायकः। पावकः॥ **वान्तो यि प्रत्यये** ।६।१।७९। यादौ[2] प्रत्यये परे ओदौतोरवावौ स्तः। गव्यम्[3], नाव्यम्[4]। (अध्वपरिमाणे च।) गव्यूतिः[5] ॥ **धातोस्तन्निमित्तस्यैव** ।६।१।८०। यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य। लव्यम्[6], अवश्यलाव्यम्[7]। तन्निमित्तस्य किम्? ओयते[8]। औयत[9] ॥ **क्षय्यजय्यौ[10] शक्यार्थे** ।६।१।८१। यान्तादेशनिपातनार्थमिदम्। क्षय्यम्, जय्यम्। शक्यार्थे किम्? क्षेतुं जेतुं[11] योग्यं क्षेयं पापं, जेयं मनः ॥ **क्रय्यस्तदर्थे[12]** ।६।१।८२। क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम्; क्रेयमन्यत्, क्रयणार्हमित्यर्थः ॥ **अदेङ्गुणः** ।१।१।२। अदेङ् च गुणसंज्ञः स्यात्॥ **तपरस्तत्कालस्य** ।१।१।७०। तत्परः[13]स्तात्परो वा उच्चार्यमाणो वर्णः

---

टिप्प०–१ समानामिति संबन्धे षष्ठी। यथासंख्यमिति। उक्तक्रमेणेत्यर्थः। २ 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया यादावित्यर्थो भवति। ३ 'गोपयसोर्यत्' इति सूत्रेण गोशब्दात् विकार इत्यर्थे यत् प्रत्ययः। ४ 'नौवयोधर्म–' इति सूत्रेण नौशब्दात्तार्यमित्यर्थे यत्। ५ 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः। ६ लुनातेः 'अचो यत्' इति यत्। 'सार्वधातुकार्धधातुकयोः' इति गुणश्च। ७ 'ओरावश्यके' इति ण्यत्। 'मयूरव्यंसकादयश्च' इति समासः। ८ आङ्पूर्वात् 'वेञ्तन्तुसंताने' इति धातोः कर्मणि लट्, यगात्मनेपदे, यजादित्वात् 'वचिस्वपियजादीनां किति' इत्यनेन संप्रसारणं पूर्वरूपं 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'आद्गुणः' इति सिद्धं रूपम्। अत्र गुणस्य परादिवद्भावेन धातोरेच्त्वेऽपि यादिप्रत्ययनिमित्तकत्वं नास्तीति भावः। ९ अत्रापि वेञः कर्मणि लङ्। यगादिकार्यं सर्वं प्राग्वत्। 'आडजादीनाम्' इति आडागमः। 'आटश्च' इति वृद्धिः। येषामित्संज्ञा कार्यानुसारतो दृश्यते त एवानुनासिका इति गुरुपरम्पराज्ञानेन कृतनिश्चया इत्यर्थः। १० 'क्षि क्षये', 'जि जये', इत्यनयोरेव ग्रहणं, नतु 'क्षीष् हिंसायाम्' 'जै क्षये' इत्यनयोः, व्याख्यानात् 'शकि लिङ् च' इत्यनेन कृत्यप्रत्ययः। ११ क्षेतुं योग्यं क्षेयं जेतुं योग्यं जेयमित्यन्वयः। 'अर्हे कृत्यतृचश्च' इति अर्हार्थे यत् प्रत्ययः। १२ तदर्थे इति तस्मै प्रकृत्यर्थविनिमयायेदं तदर्थं। तत्र क्रय्य इति निपात्यते। १३ तत्रादिना तपरपदस्योभयपरत्वम्। तदेतद्दर्शयति–तेति।

समकालस्यैव[1] संज्ञा स्यात् ॥ **आद्गुणः** ।६।१।८७। अवर्णादचि परे पूर्वपरयोरेको[2] गुणादेशः स्यात् । उपेन्द्रः, रमेशः, गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत्** ।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः[3] पाणिनीयाः[4] । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ **उरण् रपरः** ।१।१।५१। ऋ इति त्रिंशतः संज्ञेत्युक्तं, तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः, तवल्कारः ॥ **लोपः शाकल्यस्य** ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ॥ **पूर्वत्रासिद्धम्** ।८।२।१। अधिकारोऽयम्[5] । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह, विष्ण इह, हरयिह, विष्णविह ॥ **वृद्धिरादैच्** ।१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि** ।६।१।८८। आदेचि परे वृद्धिरेकादेशः । गुणापवादः । कृष्णैकत्वम्, गङ्गौघः, देवैश्वर्यम्, कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्सु** ।६।१।८९। अवर्णादेजाद्योरेत्येधत्यो[6]रूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति, उपैधते, प्रष्ठौहः, एजाद्योः किम्? उपेतः । मा भवान्प्रेदिधत् । (स्वादीरेरिणोः) स्वैरम्, स्वैरी, स्वैरिणी । (अक्षादूहिन्यामुपसंख्यानम्) अक्षौहिणी[7] सेना । (प्रादूहोढोढ्येषैष्येषु) । प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः । (ऋते च तृतीयासमासे) । सुखेन ऋतः सुखार्तः । तृतीयेति किम्? परमर्तः । (प्रवत्सतरकम्बलवसनार्णदशानामृणे) । प्रार्णमित्यादि ॥ **उपसर्गाः क्रियायोगे** ।१।४।५९। प्रादयः क्रियायोगे[8] उपसर्गसंज्ञाः स्युः । प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्,

---

टिप्प०—१ उच्चारणसदृशकालस्यैव नत्वन्यस्येति हृदयम् । २ 'एकः पूर्वपरयोः' इत्यनुवर्तते । तदाह-पूर्वपरयोरेको गुणादेश इति । ३ प्रतिज्ञायते इति प्रतिज्ञा, अनुनासिकस्य भाव आनुनासिक्यम्, प्रतिज्ञानुनासिक्यं येषामिति विग्रहः । ४ पाणिनिना प्रोक्तं पाणिनीयं, तदधीयते विदन्ति वा पाणिनीयाः । ५ स्वदेशे वाक्यार्थशून्यत्वे सति परदेशैकवाक्यार्थतया स्वार्थबोधजनकोऽधिकारः । ६ 'इण् गतौ', 'एध वृद्धौ' इत्येतयोरित्यर्थः ॥ 'वाह ऊठ्' इत्यनेन विहित ऊठ् । ७ ऊहः समूहः सोऽस्त्यस्याः सा ऊहिनी, अक्षाणामूहिनी अक्षौहिणी, परिमाणविशेषविशिष्टा सेना । ८ योगः संबन्धः । स च धात्वर्थान्वयरूपो वेदनीयः ।

वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप, एते प्रादयः ॥ **भूवादयो धातवः** ।१।३।१। क्रियावाचिनो[1] भ्वादयो धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ** ।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ॥ **वा सुप्यापिशलेः** ।६।१।९२। आदुपसर्गादृकारादौ सुब्धातौ[2] परे वृद्धिर्वा । आपिशलिग्रहणं पूजार्थम् । **अचो रहाभ्यां द्वे** ।८।४।४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । इति प्राप्ते ॥ **शरोऽचि** ।८।४।४९। द्वे न । प्रार्षभीयति, प्रर्षभीयति ॥ **एङि पररूपम्** ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः । प्रेजते, उपोषति ॥ **अचोऽन्त्यादि टि** ।१।१।६४। अचां[3] मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । (शकन्ध्वादिषु[4] पररूपं वाच्यम्) । तच्च टेः । शकन्धुः[5], कर्कन्धुः[6], कुलटा[7], सीमन्तः केशवेशे । सीमन्तोऽन्यः । मनीषा[8] । हलीषा[9] । लाङ्गलीषा । पतञ्जलिः[10] । सारङ्गः पशुपक्षिणोः । सारङ्गोऽन्यः । आकृतिगणोऽयम् । (एवे चानियोगे[11]) । क्वेव भोक्ष्यसे । अनियोगे किम् ? तवैव । (ओत्वोष्ठयोः समासे वा) । स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् ? तवौष्ठः ॥ **ओमाङोश्च** ।६।१।९५।

---

टिप्प०–१ भूश्च वाश्च भूवौ, आदिश्च आदिश्च आदी, भूवौ आदी एषामिति विग्रहः । द्वितीये आदिशब्दः प्रकारे । तथा च वासदृशा ये भूप्रभृतयस्ते धातुसंज्ञका भवन्तीत्यर्थः । सादृश्यं च क्रियावाचकत्वरूपं ग्राह्यम् । २ सुबन्तात् 'तत्करोति तदाचष्टे' इत्याद्यर्थे णिजादिकृते 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञिताः सुब्धातवोऽवगन्तव्याः । ३ अच इति निर्धारणे षष्ठी । एकवचनं जात्यभिप्रायम् । तदेतदाह–अचां मध्य इति । ४ शकन्ध्वादिशब्देषु तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । तदेतदाह–तच्च टेरिति । तच्च पररूपं टिसंज्ञकस्यैव स्यादित्यर्थः । ५ शकानां देशविशेषाणामन्धुः कूपः शकन्धुः । ६ कर्काणां राजविशेषाणामन्धुः कर्कन्धुः । ७ अटतीत्यटा । पचाद्यचि टाप् । कुलस्य अटा कुलटा । यदि तु कुलानि अटतीति विगृह्येत तदा हि कर्मण्यणि अण्णन्तान्ङीपि कुलाटीति स्यात् । ८ मनस ईषा मनीषा । ९ हलस्य ईषा हलीषा । 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः । १० पतन्तः अञ्जलयो यस्मिन् स पतञ्जलिः । ११ अनियोगोऽनिर्धारणम् ।

ओमि आङि चात् परे पररूपमेकादेशः स्यात्। शिवायोन्नमः, शिव आ इहि इति स्थिते,— शिव एहि, शिवेहि ॥ **अकः सवर्णे दीर्घः** ।६।१।१०१। अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात्। दैत्यारिः, श्रीशः, विष्णूदयः, (ऋति सवर्णे ऋ वा) । होतॄकारः, होतृकारः ॥ **एङः पदान्तादति** ।६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव, विष्णोऽव ॥ **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः[1] पदान्ते । गो अग्रम्, गोऽग्रम्। एङन्तस्य किम् ? चित्रग्वग्रं । पदान्तस्य किम् ? गोः ॥ **अनेकाल् शित् सर्वस्य** ।१।१।५५। इति प्राप्ते ॥ **ङिच्च** ।१।१।५३। ङिदनेकालप्यन्त्यस्यैव स्यात् ॥ **अवङ् स्फोटायनस्य** ।६।१।१२३। पदान्ते एङन्तस्य गोरवङ् वा स्यादचि। गवाग्रम्। पदान्ते किम् ? गवि ॥ **इन्द्रे च** ।६।१।१२४। गोरवङिन्द्रे । गवेन्द्रः। व्यवस्थितविभाषया । गवाक्षः ॥ **दूराद्धूते[3] च** ।८।२।८४। दूरात्संबोधने वाक्यस्य टेः प्लुतो वा ॥

**अथ प्रकृतिभावः** ॥ **प्लुतप्रगृह्या अचि नित्यम्** ।६।१।१२५। एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥ **ह्रस्वं लघु** ।१।४।१०। **संयोगे गुरु** ।१।४।११। संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ॥ **दीर्घं च** ।१।४।१२। गुरु स्यात् ॥ **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्** ।८।२।८६। प्लुतो वा । दे ३ वदत्त ३ । गुरोः किम् ? वकारादकारस्य मा भूत्। अनृतः किम्? कृष्ण ३ । एकैकग्रहणं पर्यायार्थम् ॥ **ईदूदेद्द्विवचनं प्रगृह्यम्** ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ, विष्णू इमौ, गङ्गे अमू । मणीवोष्ट्रस्येति[4] तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ॥

---

टिप्प०–१ प्रकृतिभावो नाम संधिकार्यरहितत्वम्। २ अत्र 'एकदेशविकृतमनन्यवत्' इति न्या. गोशब्दोऽस्त्येवेति ज्ञेयम् । ३ हूतमाह्वानं तच्च संबोधनमात्रस्योपलक्षणमित्याह–दूरात्संबोधनं इति तत्त्वबोधिनी । ४ अत्र वृत्तिकारेण 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति पठित्वा मणीव रोदसीव जंपतीवेत्युदाहृतम् । 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्ययं भारतप्रयोगः ।

**अदसो मात्** ।१।१।१२। अस्मात्[1] परावीदूतौ[2] प्रगृह्यौ स्तः । अमी ईशाः, रामकृष्णावमू आसाते । मात्किम्? अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्य[3]नुवर्तेत ॥ **चादयोऽसत्त्वे** ।१।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥ **प्रादयः** ।१।४।५८। एतेऽपि तथा । (वस्तू[4]पलक्षणं यत्र सर्वनाम प्रयुज्यते ॥ द्रव्यमित्युच्यते सोऽर्थोऽभेद्यत्वेन विवक्षितः ॥) लिङ्गसंख्यान्वययोग्यं द्रव्यम् ॥ **निपात एकाजनाङ्** ।१।१।१४। एकोऽज् निपात आङ्वर्जः प्रगृह्यः । इ इन्द्रः, उ उमेशः । वाक्यस्मरणयो[5]रङित् । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित् । ईषदुष्णम् । ओष्णम् ॥ **ओत्** ।१।१।१५। ओदन्तो निपातः प्रगृह्यः । अहो ईशाः ॥ **संबुद्धौ शाकल्यस्येतावनार्षे** ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति, विष्णविति ॥ **मय उञो वो वा** ।८।३।३३। मयः परस्य उञो वो वा स्यादचि । किमु उक्तम्, किम्वुक्तम् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इको ह्रस्वाः प्रकृत्या च वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसंधिः । चक्रि अत्र चक्र्यत्र । पदान्ता इति किम्? गौर्यौ । (न समासे[6]) । वाप्यश्वः ॥ **ऋत्यकः** ।६।१।१२८। ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्म ऋषिः, ब्रह्मर्षिः । पदान्ताः किम्? आर्च्छत्[7] ॥ **इत्यच्संधिः** ॥

---

टिप्प०-१ अदस्शब्दसंबन्धिनः । २ ननु 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति न्यायादेकारोऽप्यनुवर्तेत । सत्यम् । असंभवान्नानुवर्तनीयः । नहि अदसो मात् क्वाप्येकारः संभवतीति । ३ तथा च एकाराननुवृत्तितात्पर्यबोधकं माद्ग्रहणमिति । ४ अत्रोपलक्ष-[illegible]णार्थः वक्तव्यांशैकदेशोच्चारणम्, नतु अविद्यमानं सत् व्यावर्तकमिति । 'भू सत्तायाम्' [illegible] निर्देशस्तूपलक्षणमित्यादावप्ययमेवार्थो बोध्यः । ५ आकारस्य आङश्च भेदं प्रदर्शयितु-[illegible]क्येति । 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरण-[illegible]ङित्' । ६ ह्रस्वत्वं प्रकृतिभावश्च समासे न भवत इत्यर्थः । ७ 'ऋच्छ' इति धातोर्लङि आटि च आऋच्छत् इत्यवस्थायां 'आडजादीनाम्' इति वृद्धौ रूपमिदम् । पदान्ता इत्यनुक्तौ [illegible]द्धिर्न स्यादित्यर्थः ।

## अथ हल्सन्धिः

**स्तोः श्चुना श्चुः** ।८।४।४०। [1]सकारतवर्गयोः शकारचवर्गाभ्यां योगे श
चवर्गौ स्तः ॥ हरि[2]श्शेते, रामश्चिनोति, सच्चित्, शार्ङ्गिञ्जय ॥ **शात्** ।८।४।
शा[3]त्परस्योक्तं न स्यात् । विश्नः, प्रश्नः ॥ **ष्टुना ष्टुः** ।८।४।४१। स्तोः
योगे ष्टुः । रामष्टीकते, पेष्टा, तट्टीका, चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरन**
।८।४।४२। पदान्ताट्टवर्गात् परस्यानामः स्तोः ष्टुर्न । षट् सन्तः, षट् ते । पदा
त्किम् ? ईट्टे । टोः किम् ? सर्पिष्टमम् । ( अनाम्नवतिनगरीणामुपसंख्यानम्
षण्णाम्, षण्णवतिः, षण्णगर्यः ॥ **तोः षि** । ८।४।४३। न ष्टुत्वम् । सन्षष्ठ
**झलां जशोऽन्ते** ।८।२।३९। पदान्ते झलां जशः स्युः । वागीशः, चिद्रू
**यरोऽनुनासिकेऽनुनासिको वा** । ८।४।४५। यरः पदान्तस्याऽनुनासिके
ऽनुनासिको वा । एतन्मुरारिः, एतद्मुरारिः । स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे
तार्थो विधिरयं रेफे न प्रवर्तते । चतु[4]र्मुखः ( प्रत्यये भाषायां नित्यम् ) । तन्मा
चिन्मयम् ॥ **तोर्लि** ।८।४।६०। परसवर्णः । तल्लयः । विद्वाँल्लिखति ।
नुनासिको [6]लँः ॥ **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१। उदः परयोः स्थास्त
पूर्वसवर्णः ॥ **तस्मादित्युत्तरस्य** ।१।१।६७। पञ्चमीनि[7]र्देशेन क्रियमाणं
वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ **आदेः परस्य** ।१।१।५४। परस्य य
तत्तस्यादेर्बोध्यम् । अघोषस्य महाप्राणस्य विवारस्य श्वासस्य सस्य ताद
थकारः ॥ **झरो झरि सवर्णे** ।८।४।६५। हलः परस्य झरो लोपो व
झरि ॥ **खरि च** ।८।४।५५। झलां चरः स्युः । इत्युदो दस्य तः ।
उत्तम्भनम् ॥ **झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य

---

टिप्प०–१ स् च तुश्चानयोः समाहारः स्तुः । तस्य स्तोः । सौत्रं पुंस्त्वम् । तदेत
'श्चुना श्चुः' इत्यादावप्येवं बोध्यम् । २ 'वा शरि' इति पाक्षिकत्वाद्विसर्जनीयस्य
शेन योगे शः, चवर्गयोगे तु रामश्चिनोति । तवर्गस्य तु चवर्गयोगे सच्चित् इत्यादि ।
तु तच्छिव इत्यादि वक्ष्यत्यग्रे । ३ तवर्गस्य चुत्वं न स्यादित्यर्थः । ४ तदे
५ तवर्गस्य लकारे परे परसवर्णः स्यादिति वृत्तिः । ६ अनुनासिकाननुनासिकौ
द्विधेत्युक्तत्वात् । ७ 'अलोऽन्त्यस्य' इत्यस्यापवादोऽयम् ।

र्णः । संवारस्य नादस्य घोषस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः ।
ग्घरिः । वाग्हरिः ॥ **शश्छोऽटि** ।८।४।६३। पदान्तात् झयः परस्य शस्य छो
स्यादटि । तच्छिवः । तच्शिवः । पदान्तात्किम् ? विश्नम् । (छत्वममीति
व्यम्) । तच्छ्लोकेन ॥ **मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारो
ले । हरिं वन्दे ॥ पदस्य किम् ? गम्यते ॥ **नश्चापदान्तस्य झलि** ।८।३।२४।
श मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । झलि किम् ?
न्यते ॥ **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८। शान्तः । अङ्कितः ॥
**पदान्तस्य** ।८।४।५९। त्वङ्करोषि, त्वं करोषि ॥ **मो राजि समः क्वौ**
।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ **हे मपरे**
।८।३।२६। मपरे हकारे मस्य मो वा । किम्ह्मलयति । किं ह्मलयति ।
यवलपरे यवला वेति वक्तव्यम्) । किं ह्यः, किय्ँह्यः । किव्ँह्वलयति, किं ह्वलयति ।
ह्लादयति, किल्ँह्लादयति ॥ **नपरे नः** ।८।३।२७। नपरे हकारे मस्य नो वा ।
न्हुते । किं ह्नुते ॥ **ङः सि धुट्** ।८।३।२९। डात्परस्य सस्य धुड् वा ।
**द्यन्तौ टकितौ** ।१।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ।
ट्सन्तः । षट्सन्तः ॥ **ङ्णोः कुक् टुक् शरि** ।८।३।२८। वा स्तः । प्राङ्क्षष्ठः,
ङ्षष्ठः । सुगण्ट्षष्ठः, सुगण्षष्ठः ॥ **नश्च** ।८।३।३०। नान्तात्परस्य सस्य धुडा ।
न्त्सः, सन्सः ॥ **शि तुक्** ।८।३।३१। पदान्तस्य नस्य शे तुक् वा । सञ्छम्भुः,
च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः । 'ञछौ ञचछा ञचशा ञशाविति
ष्टय । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्' ॥ **ङमो ह्रस्वादचि**

...५०–१ तद् शिव इति स्थिते दकारस्य श्चुत्वेन जकारे कृते तस्य 'खरि च' इति चर्त्वे न शस्य छे तच्छिव इति निष्पन्नम् । २ 'येन विधिस्तदन्तस्य' विशेषणं तत् अन्ते ... संज्ञकं भवतीति क्वौ इत्यस्य क्विबन्ते इत्यर्थः । तदेतदाह-क्वीति । ३ यवलाः यस्मात्स यवलपरः, तादृशे हकारे परे मस्य क्रमेण यवला भवन्तीत्यर्थः । ४ शीति सप्तमी ...गया नश्चेति पञ्चम्याः षष्ठीं कल्पयतीत्याह-नस्येति । ५ ङम् प्रत्याहारः, संज्ञायां टित्वं सामर्थ्यात्संज्ञिभिः संबध्यते, तेन यथासंख्यं ङुट्णुट्नुटः प्रवर्तन्ते । नित्य- ...स्पष्टार्थम् ॥

**ङमुण्नित्यम्** ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुट् । प्रत्यङ्ङात्मा, सुगण्णीशः, सन्नच्युतः ॥ **समः सुटि** ।८।३।५। समो रुः सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥ **अनुनासिकात्परोऽनुस्वारः** ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ **खरवसानयोर्विसर्जनीयः** ।८।३।१५। खरि अवसाने च पदान्तस्य रेफस्य विसर्गः । (संपुंकानां सो वक्तव्यः) । सँस्कर्ता ॥ **पुमः खय्यम्परे** ।८।३।६। अम्परे खयि पुमो रुः । पुँस्कोकिलः, पुंस्कोकिलः ॥ **नश्छव्यप्रशान्** ।८।३।७। अम्परे छवि नान्तस्य पदस्य रुः ॥ **विसर्जनीयस्य सः** ।८।३।३४। खरि । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् ? प्रशान्तनोति । पदस्य किम् ? हन्ति । अम्परे किम् ? सन्त्सरुः खड्गमुष्टिः ॥ **नॄन्पे** ।८।३।१० । नॄनित्यस्य रुर्वा पे ॥ **कुप्वोः ≍क≍पौ च** ।८।३।३७। कवर्गे पवर्गे च परे विसर्गस्य ≍क≍पौ स्तः । चाद्विसर्गः । नॄँ≍पाहि । नॄंः पाहि । नॄं≍पाहि । नॄंः पाहि । नॄन्पाहि ॥ **सोऽपदादौ** ।८।३।३८। विसर्गस्य सः स्यादपदाद्योः कुप्वोः । पयस्पाशम् । पयस्कल्पम् । यशस्काम्यति । (अनव्ययस्येति वाच्यम्) । प्रातःकल्पम् । (काम्ये रोरेवेति वाच्यम् ।) नेह । गीः काम्यति ॥ **इणः षः** ।८।३।३९। इणः परस्य विसर्गस्य षः स्यात् पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ॥ **कस्कादिषु च** ।८।३।४८। एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यस्य तु सः । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालमित्यादि । आकृतिगणोऽयम् ॥ **तस्य परमाम्रेडितम्** ।८।१।२। द्विरुक्तस्य परमाम्रेडितं स्यात् ॥ **कानाम्रेडिते** ।८।३।१२। कान्नकारस्य रुराम्रे-

टिप्प०–१ अनुनासिकादिति ल्यब्लोपे पञ्चमी बोध्या, तदभिप्रायेणैवानुनासिकं विहाय इत्याद्यर्थः । २ अत्र 'सोऽपदादौ' इत्यतः सः 'इणः षः' इति सूत्रं चानुवर्तते । तथा च एष्विण इत्याद्यर्थः । ३ कान् कानिति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात् । इह मा भूत्,– कान् कान् पश्यसि । अत्र एकः किंशब्दः प्रश्ने, द्वितीयः क्षेपे । कान् कुत्सितान् पश्यसीत्यर्थः ।

डिते । काँस्कान् ॥ कांस्कान् ॥ छे च[1] ।६।१।७३। ह्रस्वस्य छे तुक् । स्वच्छाया । शिवच्छाया ॥ आङ्[2]माङोश्च ।६।१।७४। तुक् छे । आच्छादयति । माच्छिदत् ॥ दीर्घात् ।६।१।७५। तुक् छे । म्लेच्छति ॥ पदान्ताद्वा ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीछाया । लक्ष्मीच्छाया ॥ इति हल्संधिः ॥

## अथ विसर्गसन्धिः ।

विसर्जनीयस्य सः ।८।३।३४। खरि । विष्णुस्त्राता ॥ शर्परे[3] विसर्जनीयः ।८।३।३५। शर्परे खरि विसर्गस्य विसर्गो न त्वन्यत् । कः त्सरुः । घनाघनः क्षोभणः ॥ वा शरि ।८।३।३६। शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते । (खर्परे शरि वा विसर्गस्य लोपो वक्तव्यः) । हरिस्फुरति, हरिः स्फुरति ॥ ससजुषो रुः ।८।२।६६। पदान्तस्य[4] सस्य सजुष्[5]शब्दस्य च रुः स्यात् ॥ अतो रोरप्लुतादप्लुते ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः । अतः किम् ? देवा अत्र । अतीति किम् ? श्व आगन्ता । अप्लुतात्किम् ? एहि सुस्रोत ३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यात्प्लुतस्यासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यम्; दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुते इति किम् ? तिष्ठतु पय अ३ग्निदत्त ॥ हशि च ।६।१।११४। तथा[6] । शिवो वन्द्यः ॥ भोभगोअघोअपूर्वस्य योऽशि ।८।३।१७। एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रुत्वे यत्वे च कृते ॥ व्योर्[7]लघुप्रयत्नतरः शाकटायनस्य ।८।३।१८। अशि पदान्ते ॥ ओतो गार्ग्यस्य ।८।३।२०। ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य

---

टिप्प०–१ छकारोत्तरवर्त्यकार उच्चारणार्थः । 'विदिभिदिच्छिदेः कुरच्' इति सूत्रनिर्देशात् । २ अत्र 'सहचरितासहचरितयोर्मध्ये सहचरितस्यैव ग्रहणम्' इति न्यायेन आङः साहचर्यात् माङपि अव्ययमेव ग्राह्यम् । ३ सत्वादेरपवादोऽयम् । शर् परः यस्मादिति बहुव्रीहिः । ४ पदान्तस्येत्यनुवृत्तं ससजूभ्यां विशेष्यते । विशेषणेन तदन्तविधिः । अतः 'पदान्तस्य सस्य सजुष्शब्दस्य' इति सिद्धम् । ५ तदन्तस्य पदस्येत्यर्थः । तेन 'सजुषौ, सजुषः' इत्यत्रापि नातिव्याप्तिः । ६ पूर्वसूत्रवदप्लुतादतः परस्य रोरुः स्यात् । ७ वकारयकारयोः लघुप्रयत्नतरः लघूच्चारणतरः । आन्तरतम्याद्वस्य वः, यस्य यो ज्ञेयः ॥

यस्य नित्यं लोपः । भो अच्युत । लघुप्रयत्नपक्षे । भोयच्युत । पदान्तस्य किम्? तोयम् ॥ **हलि सर्वेषाम्** ।८।३।२२। भोभगोअघोअपूर्वस्य यस्य नित्यं लोपः स्याद्धलि ॥ भो देवाः । भगो नमस्ते । अघो याहि । देवा यान्ति ॥ **रोऽसुपि** ।८।२।६९। अह्नो रेफादेशो न तु सुपि । अहरहः । अहर्गणः । असुपि किम्? अहोभ्याम् । अत्र 'अहन्' इति रुत्वम् । (रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्) । अहोरूपम् । गतमहो रात्रिरेषा । एकदेश[1]विकृतन्यायेनाहोरात्रः । अहोरथन्तरम् । (अहरादीनां पत्यादिषु वा रेफः) । विसर्गापवादः । अहर्पतिः, गीर्पतिः, धूर्पतिः । पक्षे विसर्गोपध्मानीयौ ॥ **रो रि** ।८।३।१४। रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे[2] पूर्वस्य दीर्घोऽणः** ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः । पुना रमते, हरी रम्यः, शंभू राजते ॥ **ढो ढे लोपः** ।८।३।१३। लीढः । अणः किम्? तृढः । वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रो रीति लोपे च प्राप्ते ॥ **विप्रतिषेधे[3] परं कार्यम्** ।१।४।२। तुल्य[4]बलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रो रीत्यस्यासिद्धत्वादुत्वमेवं[5] मनोरथः ॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि नतु नञ्[6]समासे । एष विष्णुः । स शंभुः । अकोः किम्? एषको रुद्रः । अनञ्समासे किम्? असः शिवः । हलि किम्? एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।-

---

टिप्प०–१ 'एकदेशविकृतमनन्यवद्भवति' एकदेशेन पुच्छेन विकृतः श्वा तद्भिन्नो न भवति यथा तथेत्यर्थः । २ ढश्च रश्च ढ्रौ, तौ लोपयतीति ढ्रलोपः, तस्मिन् । णिजन्तात्कर्मण्यणि उपपदसमासः । अचीति विस्पष्टार्थम् । ३ सिद्धासिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे–' इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेवेति हृदयम् । यथाहुः–'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति । ४ तुल्यबलेति । द्वयोः कच्चिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसंभविकार्यसमर्पणे परं कार्यमित्यर्थः । ५ अत्र 'प्रकृतिवदनुकरणम्' इत्यस्य वैकल्पिकत्वात्त्यदाद्यत्वाभावो बोध्यः । ६ नञ्तत्पुरुषस्य पूर्वपदार्थप्राधान्येन तच्छब्दार्थस्योपसर्जनत्वात् त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति शङ्काभिप्रायः । समाधानं तु इदमेव नञ्समासस्य उत्तरपदार्थप्राधान्ये ज्ञापकम् ।

१३४। स इत्यस्य सोर्लोपः स्यादचि। पादश्चेल्लोपे सत्येव पूर्येत। सेमामंविड्ढिप्रभृतिम्। सैष दाशरथी रामः॥ इति विसर्गसन्धिः॥ ४॥

## अथाजन्तपुंलिङ्गाः।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥ **कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः॥ **स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। सु औ जस् प्रथमा। अम् औट् शस् द्वितीया। टा भ्यां भिस् तृतीया। ङे भ्यां भ्यस् चतुर्थी। ङसि भ्यां भ्यस् पञ्चमी। ङस् ओस् आम् षष्ठी। ङि ओस् सुप् सप्तमी॥ **ङ्याप्प्रातिपदिकात्** ।४।१।१। ङ्यन्तादावन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः॥ **सुपः** ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः॥ **द्व्येकयोर्द्विवचनैकवचने** ।१।४।२२। द्वित्वैकत्वयोरेते स्तः॥ **विरामोऽवसानम्** ।१।४।११०। वर्णानामभावोऽवसानसंज्ञः स्यात्। रुत्वविसर्गौ। रामः। (अयोगवाहानामस्योपरि शर्षु चेति वाच्यम्)। यमानुस्वारविसर्गजिह्वामूलीयोपध्मानीया अयोगवाहाः। तेनेह विसर्गस्य यर्त्वादनचि चेति द्वित्वपक्षे रामः॥ **सरूपाणामेकशेष एकविभक्तौ** ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥ **प्रथमयोः पूर्वसवर्णः** ।६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥ **नादिचि** ।६।१।१०४। आदिचि न पूर्वसवर्णदीर्घः वृद्धिरेचि। रामौ॥ **बहुषु**

---

टिप्प०–१ अधातुप्रत्ययावित्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्। अधातुरप्रत्यय इति पुंलिङ्गनिर्देशस्तु परवल्लिङ्गमित्युत्तरपदलिङ्गवत्त्वाद्बोध्यः। २ सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः। ३ अत्रार्थवदित्यनुवर्तते तत्सामर्थ्यात्तदन्तविधिरिति तत्त्वबोधिनी। ४ सुबिति प्रत्याहारो न सप्तमीबहुवचनम्; एकस्यानेकसंज्ञाविधानानर्थक्यात्। ५ इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः॥

बहुवचनम् ।१।४।२१। चुटू ।१।३।७। प्रत्यय[1]याद्यौ चुटू इतौ स्तः ॥ विभक्तिश्च ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ न विभक्तौ तुस्माः ।१।३।४। विभक्तिस्थास्तुस्मा नेतः । इति सस्य नेत्वम् । रामाः ॥ एकवचनं संबुद्धिः ।२।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥ यस्मात्प्रत्यय-विधिस्तदादि प्रत्ययेऽङ्गम् ।१।४।१३। यः प्रत्ययो यस्मात्क्रियते तदादि शब्द-स्वरूपं तस्मिन्नङ्गं स्यात् ॥ एङ्ह्रस्वात्संबुद्धेः ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः ॥ अमि पूर्वः[2] ।६।१।१०७। अकोऽम्यचि पूर्वरूपमेकादेशः स्यात् । रामम् । रामौ ॥ लशक्वतद्धिते ।१।३।८। तद्धितवर्जप्रत्यय[3]याद्या लशकवर्गा इतः स्युः ॥ तस्मा[4]च्छसो नः पुंसि ।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ अ[5]ट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२। अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । इति प्राप्ते ॥ पदान्तस्य[6] ।८।४।३७। नस्य णो न । रामान् ॥ टाङसिङसामिनात्स्याः ।७।१।१२। अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥ सुपि च ।७।३।१०२। यञादौ[7] सुप्यतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥ अतो भिस ऐस् ।७।१।९। अनेकाल् शित्सर्वस्य । रामैः ॥ [8]ङेर्यः ।७।१।१३। अतो-

---

टिप्प०–१ 'आदिर्ञिटुडवः' इत्यत आदिः 'पः प्रत्ययस्य' इत्यतः प्रत्ययस्येति चानुवर्तते । २ प्रथमयोरिति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः । अत्र 'पूर्वसवर्ण' इत्यनुवृत्त्यैव सिद्धे 'पूर्व'ग्रहणं व्यर्थमिति न वाच्यम् । रामं कुमारीमित्यादावान्तरतम्याद्द्विमात्राद्यापत्तेः । ३ प्रत्ययाद्या इति लश्च शश्च कुश्चेति समाहारद्वन्द्वे लशक्विति नपुंसकम् । ४ तच्छब्देन संनिहितः पूर्वसवर्णदीर्घः परामृश्यते । दीर्घमात्रपरामर्शे तु एतान् गाः पश्येत्यत्रापि नत्वप्रसङ्गात् । ५ अत्र सूत्रे रषाभ्यामिति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदमिति **तत्त्वबोधिन्याम्** । ६ अत्र सूत्रे अनन्तरस्येतिव्यवस्थापकन्यायाप्रवृत्तिर्बोध्या । अपदान्तस्येत्यनुवृत्त्यैतस्य भाष्ये प्रत्याख्यानात् । ७ यञीत्यनुवर्तते । अल्ग्रहणात्तदादिविधिरित्याह । ८ ङेरेति चतुर्थ्येकवचनस्य ग्रहणं नतु सप्तम्येकवचनस्य व्याख्यानात् । अत एव ङेराम् इत्यत्रास्याग्रहणं समानाधिकरणे स्त्रियामित्यादिनिर्देशाच्च ।

ऽङ्गात्परस्य ङेर्यादेशः स्यात् ॥ **स्थानिवदादेशोऽनल्विधौ** ।१।१।५६। आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात्सुपि चेति दीर्घः । रामाय । रामाभ्याम् ॥ **बहुवचने झल्येत्** ।७।३।१०३। झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः ॥ **वाऽवसाने** ।८।४।५६। अवसाने झलां चरो वा । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥ **ओसि च** ।७।३।१०४। अतोऽङ्गस्यैकारः । रामयोः ॥ **ह्रस्वनद्यापो नुट्**[1] ।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ॥ **नामि** ।६।४।३। अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे । रामयोः । सुपि एत्वे कृते ॥ **आदेशप्रत्यययोः** ।८।३।५९। इणुकुभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णमुकुन्दादयः ॥ **सर्वादीनि**[2] **सर्वनामानि** ।१।१।२७। सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्—एते पञ्चत्रिंशच्छब्दाः सर्वादयः ॥ **जसः शी**[3] ।७।१।१७। अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥ **सर्वनाम्नः स्मै** ।७।१।१४। अतः सर्वनाम्नो ङेः स्मै ॥ **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥ **आमि सर्वनाम्नः सुट्** ।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः[4] । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठोऽकजर्थः[5] । डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता

---

टिप्प०—१ एतेन 'ह्रस्वनद्यापः' इति पञ्चमी, नतु षष्ठीति स्फोटितम् । २ तद्गुणसंविज्ञानो बहुव्रीहिरयम् । 'अदः सर्वेषा'मिति लिङ्गात् । ३ दीर्घोच्चारणमुत्तरार्थम् । वारिणी । मधुनी । ४ द्वित्वविशिष्टस्यैव वाचकत्वात् । ५ अव्ययसर्वनाम्नामकच् प्राक्टेरित्युक्तेः ।

ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह । समानामिति ज्ञापकात् ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** । ।१।१।३४। एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे । पूर्वाः । स्वाभिधेयापेक्षावधिनियमो[1] व्यवस्था । व्यवस्थायां किम्? दक्षिणा गाथकाः, कुशला इत्यर्थः । असंज्ञायां किम्? उत्तराः कुरवः ॥ **स्वमज्ञातिधनाख्यायाम्** ।१।१।३५। ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे । स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः** ।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे–अन्तरा वा गृहाः, बाह्या इत्यर्थः । अन्तरे–अन्तरा वा शाटकाः, परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा** ।७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात्, पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् । (संज्ञोपसर्जनीभूतास्तु न सर्वादयः)। सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय । (अन्तरमिति गणसूत्रेऽपुरीति वक्तव्यम्)। अन्तरायां पुरि । **तृतीयासमासे** ।१।१।३०। अत्र सर्वनामता न । मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय ॥ **द्वन्द्वे च** ।१।१।३१। उक्ता संज्ञा न । वर्णाश्रमेतराणाम् । **विभाषा जसि** ।१।१।३२। वर्णाश्रमेतरे । वर्णाश्रमेतराः ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** ।१।१।३३। एते जस्युक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । तयप्रत्ययः । द्वितये, द्वितयाः । शेषं रामवत् । नेमे, नेमाः । शेषं सर्ववत् । ([2]तीयस्य ङित्सु वा)। द्वितीयस्मै, द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ॥ **जराया जरसन्यतरस्याम्** ।७।२।१०१। जराया जरस् वाऽजादौ विभक्तौ । पदाङ्गाधिकारे तस्य च तदन्तस्य च । निर्दिश्यमानस्यादेशा[3] भवन्ति । एकदेशविकृतस्या-

---

टिप्प०–१ अवधेर्नियमोऽवधिनियमः । स्वाभिधेयापेक्षश्चासाववधिनियमश्चेति विग्रहः । २ 'द्वेस्तीयः' 'त्रेः संप्रसारणं च' इति विहितस्य । ३ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वम् ।

नन्यत्वाज्जरशब्दस्य जरस्। निर्जरसौ। निर्जरसः। उपजीव्यविरोधान्न जरस्[1]। निर्जरैः। पक्षे हलादौ च रामवत्॥ **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** ।६।१।६३। पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष्, दोष्, यकृत्, शकृत्, उदक, आस्य–एषां पदादय आदेशाः स्युः शसादौ[2] वा। यत्तु आसनशब्दस्यासन्नादेश इति काशिकायामुक्तं तत्प्रामादिकमेव। पादः। पादौ। पादाः। पादम्। पादौ। पदः, पादान्। पदा, पादेन–इत्यादि। विश्वपाः॥ **दीर्घाज्जसि च** ।६।१।१०५। दीर्घाज्जसि इचि च न पूर्वसवर्णदीर्घः। वृद्धिः। विश्वपौ। विश्वपाः। हे विश्वपाः। हे विश्वपौ। हे विश्वपाः॥ **सुडनपुंसकस्य**[3] ।१।१।४३। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥ **स्वादिष्वसर्वनामस्थाने** ।१।४।१७। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदं स्यात्॥ **यचि भम्** ।१।४।१८। यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भं स्यात्॥ **आकडारादेका संज्ञा** ।१।४।१। इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया, या पराऽनवकाशा च[4]। तेन शसादावचि भसंज्ञैव, न पदत्वम्॥ **आतो धातोः** ।६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलोऽन्त्यस्य। विश्वपः[5]। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः।

---

टिप्प०–१ उपजीव्यं कारणं तद्विरोधान्न जरसादेशः। अदन्तत्वादेव भिस ऐस्प्राप्तिः। पुनश्च स ऐस् यद्यजादिविभक्तित्वेनादन्तं बाधित्वा जरसादेशं प्रति निमित्तं स्यात्तदा भवेदेवोपजीव्यविरोधः। तथा च सन्निपातपरिभाषाऽत्र प्रवर्तत एवेति ज्ञेयम्। २ 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्तत इति भावः। ३ सुडिति प्रत्याहारस्तत एव स्वादिपञ्चानां ग्रहणम्। आगमस्य तु सुटो न ग्रहणम्। 'प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहण'मिति परिभाषणात्। 'सर्वनामस्थाने चे'त्यत्रासंबुद्धिरिति पर्युदासाच्च। ४ एकेति स्त्रीलिङ्गात्प्रकरणाच्च संज्ञालाभे संज्ञाग्रहणं त्विन्त्यप्रयोजनम्। ५ विश्वं पाति रक्षतीति विग्रहः।

धातोः किम्? हाहान्[1]। आत इति योग[2]विभागादधातोरप्याकारलोपः क्वचित्। क्त्वः। श्नः। हरिः। हरी॥ **जसि च** ।७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥ **ह्रस्वस्य गुणः** ।७।३।१०८। संबुद्धौ। हे हरे। हरिम्। हरीन्॥ **शेषो घ्यसखि** ।१।४।७। शेष इति स्पष्टार्थम्। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्॥ **आङो नाऽस्त्रियाम्** ।७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। हरिभ्याम् ३। हरिभिः॥ **घेर्ङिति** ।७।३।१११। घिसंज्ञकस्य ङिति सुपि गुणः। हरये। हरिभ्यः २। गुणे कृते॥ **ङसिङसोश्च**[3] ।६।१।११०। एङो ङसिङसोरति परे पूर्वरूपमेकादेशः। हर्योः। हरीणाम्॥ **अच्च घेः** ।७।३।११९। इदुद्भ्यां परस्य ङेरौद्धेरत्। हरौ। हरिषु। एवं कव्यादयः॥ **अनङ् सौ** ।७।१।९३। सख्युरङ्गस्यानङादेशोऽसंबुद्धौ सौ॥ **अलोऽन्त्यात्पूर्व उपधा** ।१।१।६५। अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्॥ **सर्वनामस्थाने चासंबुद्धौ** ।६।४।८। नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने॥ **अपृक्त[4] एकाल्प्रत्ययः** ।१।२।४१। **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते॥ **प्रत्ययलोपे प्रत्ययलक्षणम्** ।१।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात्॥ **नलोपः प्रातिपदिकान्तस्य** ।८।२।७। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः। सखा॥ **सख्युरसंबुद्धौ**[5] ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्॥ **अचोऽञ्णिति** ।७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च। सखायः। हे सखे। सखायौ।

---

टिप्प०-१ गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम्। केचित्तु अकारो वासुदेवस्तेन सह वर्तन्ते इति सास्तान्सानिति प्रत्युदाहरन्ति। २ क्त्वः श्नः ल्यप् श्नः 'शानज्झौ' 'क्रमश्च क्त्वि' इति निर्देशादेतत्सूत्रेष्वातो लोपः सिध्यति, तथापि क्त्वो ल्यप् भवति श्नः शानज्भवतीति व्याख्यानवाक्येष्वसाधुत्ववारणायेदमुक्तम्। ३ ङसोश्चेत्येव सिद्धे ङसग्रहणं चिन्त्यप्रयोजनम्। ४ इदं सूत्रं त्यक्तुं शक्यम्। अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धेरिति केचित्। ५ सख्युरसंबुद्धिस्त्येव सूत्रयितुं शक्यमिति मनोरमा।

सखायं। सखीन्। सख्या। सखिभ्याम्। सखिभिः। सख्ये॥ **ख्यत्यात्परस्य** ।६-।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः २॥ **औत्** ।७।३।११८। इदुद्भ्यां परस्य ङेरौत्। सख्यौ। शेषं हरिवत्॥ **पतिः समास एव** ।१।४।८। घिसंज्ञः। पत्या। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो नित्यं बहुवचनान्तः॥ **बहुगणवतुडति संख्या**। ।१।१।२३। **डति च** ।१।१।२५। डत्यन्ता संख्या षट्संज्ञा स्यात्॥ **षड्भ्यो लुक्** ।७।१।२२। जश्शसोः॥ **प्रत्ययस्य लुक्श्लुलुपः** ।१।१।६१। लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्। जसि चेति गुणे प्राप्ते। **न लुमताऽङ्गस्य** ।१।१।६३। लुक् श्लु लुप् एते लुमन्तः। लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कतिभिः। कतिभ्यः। कतिभ्यः। कतीनाम्। कतिषु। अस्मद्युष्मत्षट्संज्ञकास्त्रिषु सरूपाः। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥ **त्रेस्त्रयः** ।७।१।५३। आमि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि। प्रियत्रयाणाम्। द्विशब्दो नित्यं द्विवचनान्तः॥ **त्यदादीनामः** ।७।२।१०२। एषामकारो विभक्तौ। द्विपर्यन्तानामेवेष्टिः। द्वौ २। द्वाभ्याम् ३। द्वयोः २। द्विपर्यन्तानां किम्? भवान्। भवन्तौ। पाति लोकमिति पपीः—सूर्यः। पप्यौ। पप्यः। हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः। पप्योः। पप्याम्। पप्यि। पपीषु। एवं वातप्रम्यादयः। बह्वयः श्रेयस्यो यस्य स बहुश्रेयसी॥ **यू स्त्र्याख्यौ नदी** ।१।४।३। ईदूदन्तौ

---

**टिप्प०**–१ एते च विधीयमानाः सर्वादेशा एव। 'क्सस्याची'ति प्रकृते 'लुग्वा' इति लुग्विधानात्। २ विशेषविहितापि लुगादिसंज्ञा लोपसंज्ञां न बाधते। एकसंज्ञाधिकारादन्यत्र संज्ञानां बाध्यबाधकभावानङ्गीकारादिति भावः। ३ एतच्चाङ्गमनाङ्गं वेति शेखरे स्पष्टम्। ४ संख्यार्थक एव त्रिशब्दो नित्यं बहुवचनान्तो नतु शब्दवाचकः। अत एव सूत्रे त्रेरित्येव परामर्शः साधुः। ५ युष्मदस्मच्छब्दयोरिष्ट्यभावेऽपि दोषो नास्ति। आत्वयत्वलोपैर्विशेषविहितै रत्वस्य बाधनात्। ६ वातप्रमीर्निःशृङ्गो मृगाकृतिर्जन्तुविशेषः। ७ ईश्च ऊश्च यू व्याख्याना दीर्घयोरेव ग्रहणमविभक्तिकोऽयं निर्देश इत्येके। दीर्घाज्जसि चेति निषेधस्य वा छन्दसीति पाक्षिकत्वात्प्रथमयोरिति दीर्घ इत्यन्ये।

नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। (प्रथमलिङ्गग्रहणं च)। पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः॥ **अम्बार्थनद्योर्ह्रस्वः** ।७।३।१०७। अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ। हे बहुश्रेयसि॥ **आण् नद्याः** ।७।३।११२। नद्यन्तात्परेषां ङितामाडागमः॥ **आटश्च** ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्॥ **ङेराम् नद्याम्नीभ्यः** ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेरामादेशः स्यात्। इह परत्वादाटा नुट् बाध्यते। बहुश्रेयस्याम्। शेषं पपीवत्। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्। प्रधीः॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** ।६।४।७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥ **एरनेकाचोऽसंयोगपूर्वस्य** ।६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये परे। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः। ङौ तु ग्रामण्याम्॥ **गतिश्च** ।१।४।६०। प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। (गतिकारकेतरपूर्वपदस्य यण्नेष्यते)। शुद्धधियौ। शुद्धधियः॥ **न भूसुधियोः** ।६।४।८५। एतयोरचि सुपि यण्न। सुधीः। सुधियौ। सुधियः। इत्यादि। सुखमिच्छतीति सुखीः। सुतीः। सुख्युः २। सुत्युः २। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥ **तृज्वत्क्रोष्टुः** ।७।१।९५।

---

टिप्प०-१ इदं च यूस्त्र्याख्याविति पूर्वसूत्रविषयमेव नतु ङिति ह्रस्वश्चेति सूत्रविषयम्। तेनातिश्रिये ब्राह्मणायेत्यत्र विकल्पो न। आटि कृते तु पुनर्न प्रवर्तते। सकृद्गताविति न्यायाश्रयणादिति भावः। आमि कृते नुट्प्राप्तिः स्थानिवत्त्वेन ङित्वादाट्प्राप्तिश्चेति तुल्यबलविरोधे परत्वादाड्रूपं कार्यं भवतीति भावः। ३ प्रध्यायतीति प्रधीः। ध्यायतेः संप्रसारणं चेति क्विपि संप्रसारणे पूर्वरूपे च कृते हल इति दीर्घः। यदि तु प्रकृष्टा धीर्बुद्धिर्यस्येति विगृह्यते तदा धीशब्दस्य नित्यस्त्रीत्वात् प्रथमलिङ्गग्रहणं चेति नित्यस्त्रीलिङ्गातिदेशे यथासंभवं नदीकार्यं बोध्यम्। ४ इदं च धातोर्भिन्नवचनत्वेऽपि समानाधिकरणं विशेषणम्। 'वेदाः प्रमाणम्' इत्यादौ तथादर्शनात्। ५ अयं चार्थ उपसर्गाः क्रियायोग इत्यत्र योगग्रहणाल्लभ्यते। ६ न चात्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तत्वात् 'लोपः शाकल्यस्य' इति यलोपः प्राप्नोतीति शङ्क्यम्। उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात्।

असंबुद्धौ सर्वनामस्थाने । क्रोष्टु इत्यस्य स्थाने क्रोष्टृ प्रयोक्तव्य इत्यर्थः ॥ **ऋतो ङि-सर्वनामस्थानयोः** ।७।३।११०। गुणः । इति प्राप्ते । **ऋदुशनस्पुरुदंसोऽनेहसां च** ।७।१।९४। ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ । **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्** ।६।४।११। अबादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् ॥ **विभाषा तृतीयादिष्वचि** ।७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा, क्रोष्टुना । क्रोष्ट्रे, क्रोष्टवे ॥ **ऋत उत्** ।६।१।१११। ऋतो ङसिङसोरति परे पूर्वपरयोरुदेकादेशः । रपरः ॥ **रात्सस्य** ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपः, नान्यस्य । विसर्गः । क्रोष्टुः २ । क्रोष्टोः २ । क्रोष्ट्रोः । (नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन) । क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः । हूह्वौ इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः २ । अतिचमूनाम् । अतिचम्वाम् । खलपूः ॥ **ओः सुपि** ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् अचि सुपि । खलप्वौ । खलप्वः । एवं सुल्वादयः । स्वयंभूः । स्वयंभुवौ । स्वयंभुवः । एवं स्वभूः । वर्षाभूः ॥ **वर्षाभ्वश्च** ।६।४।८४। अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः । (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः)[1] । दृन्भ्वौ । दृन्भ्वः । एवं करभूः । पुनर्भूः । दृग्भूकाराभूशब्दौ[2] स्वयंभूवत् । धाता[3] । धातारौ । धातारः । हे धातः । (ऋवर्णान्नस्य णत्वं वाच्यम्) । धातॄणाम् । एवं नप्त्रादयः । अप्तृन्निति सूत्रे नप्त्रादिग्रहणं व्युत्पत्तिपक्षे[4] नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ । नरः ॥ **नृ च** ।६।४।६। अस्य नामि वा दीर्घः । नृणाम्,

---

टिप्प०–१ इदं च वार्तिकं 'वर्षाभ्वश्चे'त्यत्रानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् । २ प्राचा तु दृग्भूकाराभूशब्दौ वर्षाभूवदुदाहृतौ तदुपेक्ष्यमिति भावः । ३ दधातीति धाता अब्जयोनिः । डुधाञस्तृच् तृन् वा, अनङ्दीर्घसुलोपनलोपाः । ४ अव्युत्पत्तिपक्षे दीर्घशङ्कैव नास्ति, अबादिष्वपठनादिति भावः ।

नृणाम् ॥ **गोतो णित्** ।७।१।९०। गोशब्दात्परं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः ॥ **औतोऽम्शसोः** ।६।१।९३। ओकारादम्शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः २ ॥ **रायो हलि** ।७।२।८५। रैशब्दस्याकारादेशो हलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥ **इत्यजन्तपुंलिङ्गाः** ॥

## अथाजन्तस्त्रीलिङ्गाः ।

रमा ॥ **औङ आपः** ।७।१।१८। आबन्तादौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥ **संबुद्धौ च** ।७।३।१०६। आप एकारः । हे रमे । हे रमे । हे रमाः । रमाम् । रमाः ॥ **आङि चापः** ।७।३।१०५। आङि ओसि चाप एकारः । रमया । रमाभ्याम् । रमाभिः ॥ **याडापः** ।७।३।११३। आपो ङितो याट् । वृद्धिः । रमायै । रमाभ्यः । रमायाः । रमयोः । रमाणाम् । रमासु । एवं दुर्गादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च** ।७।३।११४। आबन्तात्सर्वनाम्नो ङितः स्याडापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः २ । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादयोऽप्याबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । इत्यादि । अन्तरस्यै । शालायै । अपुरीत्युक्तेर्नेह । अन्तरायै नगर्यै । तीयस्य ङित्सूपसंख्यानम् । द्वितीयस्यै । द्वितीयायै । एवं तृतीया । अम्बार्थनद्योर्ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल । असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न । हे अम्बाडे । हे अम्बाले । हे अम्बिके । जरा । जरसौ । जरे । इत्यादि । पक्षे हलादौ च रमावत् । गोपा विश्वपावत् । मतीः । मत्या ॥ **ङिति ह्रस्वश्च** ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै । मतये । मत्याः । मतेः ।

---

टिप्प०-१ ग्लौर्मृगाङ्कः कलानिधिरित्यमरात् ग्लौश्चन्द्रः । २ रमु क्रीडायामित्यस्मात्पचाद्यच्चि टाप् । लिङ्गविशिष्टपरिभाषया स्वादयः । हल्ङ्यादिलोपः । ३ रमे इति । यस्येति चेति लोपस्तु न भवति अभत्वात् औङः श्यां प्रतिषेधाच्च । ४ दीर्घोच्चारणं प्राग्वत्स्पष्टप्रतिपत्त्यर्थम् ।

परत्वात् औत् इति प्राप्ते ॥ **इदुद्भ्याम्** ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम्। मत्याम्। मतौ। शेषं हरिवत्। एवं बुद्ध्यादयः॥ **त्रिचतुरोः स्त्रियां तिसृ चतसृ** ।७।२।९९। स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ॥ **अचि र ऋतः** ।७।२।१००। तिसृचतसृोर्ऋतो रादेशोऽचि। गुणदीर्घोत्वानामपवादः। तिस्रः २। तिसृभिः। तिसृभ्यः। आमि नुट्॥ **न तिसृचतसृ** ।६।४।४। एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु। द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्यौ। गौर्यः। हे गौरि। गौर्यै इत्यादि। एवं नद्यादयः। लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः। स्त्री। हे स्त्रि॥ **स्त्रियाः** ।६।४।७९। अस्येयङ्जादौ प्रत्यये। स्त्रियौ। स्त्रियः॥ **वाऽम्शसोः** ।६।४।८०। अमि शसि च स्त्रिया इयङ् वा। स्त्रियम्, स्त्रीम्॥ स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः २। स्त्रियोः। परत्वान्नुट्। स्त्रीणाम्। स्त्रियाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः॥ **नेयङुवङ्स्थानावस्त्री** ।१।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः। श्रियै, श्रिये। श्रियाः २। श्रियः २॥ **वाऽऽमि** ।१।४।५। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्–श्रियाम् २। श्रियि–श्रियाम्॥ धेनुर्मतिवत्। **स्त्रियां च** ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते॥ **ऋन्नेभ्यो ङीप्** ।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री। गौरीवत्। वधूः। शेषं नदीवत्। भ्रूः श्रीवत्। स्वयम्भूः पुंवत्। **न षट्स्वस्रादिभ्यः** ।४।१।१०। एभ्यो ङीप्टापौ न स्तः। 'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा॥ याता मातेति सप्तैते स्वस्रादय उदाहृताः॥' स्वसा। स्वसारौ। माता पितृवत्। शसि मातॄः। द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्॥ **इत्यजन्तस्त्रीलिङ्गाः**॥

---

टिप्प०–१ अत्र वार्तिकं संज्ञायां कन्युपसंख्यानमिति। तिसृकानामग्रामः। २ इदं च अनुवृत्ततिसृचतसृशब्दयोः षष्ठ्यन्तत्वलाभार्थम्। ३ अत्र वा आमि इत्येव छेदः, नतु अमीति। द्वितीयैकवचने नदीकार्याभावात्। ४ स्वस्रादीनां ङीप् प्राप्तः। षट्संज्ञकानां तूभावपि।

## अथाजन्तनपुंसकलिङ्गाः ।

**अतोऽम्** ।७।१।२४। अतोऽङ्गात्क्लीबात् स्वमोरम्[1] । ज्ञानम् । एङ्ह्रस्वादिति संबुद्धिलोपः । हे ज्ञान ॥ **नपुंसकाच्च** ।७।१।१९। क्लीबादौङः शी । भसंज्ञायाम् । **यस्येति च** ।६।४।१४८। ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यकारलोपे प्राप्ते । (औङः श्यां प्रतिषेधः) । ज्ञाने । **जश्शसोः शिः** ।७।१।२०। क्लीबात् ॥ **शि सर्वनामस्थानम्** ।१।१।४२। **नपुंसकस्य झलचः** ।७।१।७२। झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे ॥ **मिदचोऽन्त्यात्परः** ।१।१।४७। अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः । **अद्ड्डतरादिभ्यः पञ्चभ्यः** ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः ॥ **टेः** ।६।४।१४३। डिति भस्य टेर्लोपः । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् । इतरत् । अन्यत् २ । अन्यतरत् २ । अन्यतमशब्दस्य तु अन्यतममित्येव । (एकतरात्प्रतिषेधः) एकतरम् ॥ **ह्रस्वो नपुंसके प्रातिपदिकस्य** ।१।२।४७। अजन्तस्येत्येव । श्रीपं ज्ञानवत् ॥ **स्वमोर्नपुंसकात्** ।७।१।२३। लुक् वारि ॥ **इकोऽचि विभक्तौ**[2] ।७।१।७३। इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी, वारीणि । न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे, हे वारि । घेर्ङितीति गुणे प्राप्ते । (वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन) । वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥ **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** ।७।१।७४। प्रवृत्तिनिमित्तैक्ये[4] भाषितपुंस्कमिगन्तं क्लीबं

---

टिप्प०-१ अमोऽम्विधानं 'स्वमोर्नपुंसकादि'ति प्राप्तस्य लुको बाधनार्थमेव । २ विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । सुपीति वक्तव्ये विभक्तिग्रहणं चिन्त्यप्रयोजनम् । नामधातौ तिङि क्रियावाचकत्वेन नपुंसकत्वाभावादिति केचिदाहुः । हलादिविभक्तौ नुम्वारणार्थमेवात्राज्ग्रहणम् । स च हलादिविभक्तौ प्रवृत्तोऽपि नलोप इत्यनेन लुप्तः स्यादेवेत्यज्ग्रहणं व्यर्थं सज्ज्ञापयति लुमताशब्देन लुप्तानामनित्यत्वमिति । ४ यद्यत्र भाषितः पुमान्येन शब्देन स भाषितपुंस्कः शब्द इति विज्ञायेत तदा पीलुने इत्यादावतिप्रसङ्गः स्यादतो व्याचष्टे-प्रवृत्तिनिमित्तैक्य इति ।

पुंवद्वा टादावचि । अनादये, अनादिने–इत्यादि । शेषं वारिवत् । 'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । क्लीबवृत्तौ तदेव स्यादुक्तपुंस्कं तदुच्यते । 'पीलुर्वृक्षः फलं पीलु पीलुने नतु पीलवे । वृक्षे निमित्तं पीलुत्वं तज्जःत्वं तत्फले पुनः ॥' तस्मै पीलुने । न पुंवत्; प्रवृत्तिनिमित्तभेदात् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ।७।१।७५। टादावचि ॥ **अल्लोपोऽनः** ।६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः २ । दध्नोः २ ॥ **विभाषा ङिश्योः** ।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याकारस्य लोपो वा ङिश्योः । दध्नि, दधनि । शेषं वारिवत् । एवमस्थि सक्थ्यक्षीणि । सुधि । सुधिनी । सुधीनि । हे सुधे, हे सुधि । सुधिने इत्यादि । मधु । मधुनी । मधूनि । हे मधो, हे मधु । एवम्मन्वादयः । सुलु । सुलुनी । सुलूनि । सुलुना । इत्यादि । धातृ । धातृणी । धातॄणि । हे धातः, हे धातृ । धात्रा । धातृणा । एवं ज्ञातृकर्त्रादयः ॥ **एच इग्घ्रस्वादेशे**[1] ।१।१।४८। आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युना । इत्यादि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुने इत्यादि ॥ **इत्यजन्तनपुंसकलिङ्गाः** ॥

## अथ हलन्तपुंलिङ्गाः ।

**हो**[2] **ढः** ।८।२।३१। झलि पदान्ते च । लिट्, लिड् । लिहौ २ । लिहः । लिड्भ्याम् । लिट्त्सु[3], लिट्सु ॥ **दादेर्धातोर्घः** ।८।२।३२। झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः ॥ **एकाचो बशो भष्**[4] **झषन्तस्य स्ध्वोः** ।८।२।३७। धात्व-

---

टिप्प०–१ एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथा च मा कदाप्यकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह–इगेवेति । २ डस्तु न विहितः । धुट्ट् लेढीत्याद्यसिद्ध्यापत्तेः । ३ लिट्त्स्विति ढस्य जश्त्वेन डः, तस्य खरि चेति चर्त्वेन टः । तस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे टस्य ठो न । लिट्त्सु इत्यत्र तु ढस्य जश्त्वेन डकारे चर्त्वस्यासिद्धत्वात्ततः प्रागेव डः सीति पक्षे धुट्, तस्य चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः । ४ अत्र झषित्येव वक्तुमुचितम्, भष्पदाशक्तिकल्पनेन लाघवात् ।

वयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। इह व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः॥ धुक्, धुग्। दुहौ। दुहः। दुहा। दुग्भ्याम्। धुक्षु॥ **वा द्रुहमुहष्णुहष्णिहाम्** ।८।२।३३। एषां हस्य वा घो झलि पदान्ते च। ध्रुक्, ध्रुग्। ध्रुट्, ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु।१। एवं मुहः॥ **धात्वादेः षः सः** ।६।१।६४। ष्णुक्, ष्णुग्। ष्णुट्।२। एवं ष्णिहः॥ **इग्यणः संप्रसारणम्** ।१।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्॥ **वाह ऊठ्** ।६।४।१३२। भस्य वाहः संप्रसारणमूठ्॥ **संप्रसारणाच्च** ।६।१।१०८। संप्रसारणादचि पूर्वरूपमेकादेशः। वृद्धिः। विश्वौहः। इत्यादि॥ **चतुरनडुहोरामुदात्तः** ।७।१।९८। सर्वनामस्थाने॥ **सावनडुहः** ।७।१।८२। नुम्। आच्छीनद्योरिति सूत्रादादित्यधिकारादवर्णात्परोऽयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते। अमा च नुम् न बाध्यते। सुलोपः। संयोगान्तलोपः। नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। अनड्वान्॥ **अम् संबुद्धौ** ।७।१।९९। चतुरनडुहोः। हे अनड्वन्। अनड्वाहौ। अनडुहः॥ **वसुस्रंसुध्वंस्वनडुहां दः** ।८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। पदान्ते किम्? स्रस्तम्। ध्वस्तम्॥ **सहेः साडः सः** ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः। तुराषाट्, तुराषाड्। तुरासाहौ। तुराषाड्भ्यामित्यादि॥ **दिव औत्** ।७।१।८४। दिविति प्रातिपदिकस्यौत्स्यात्सौ। सुद्यौः। सुदिवौ॥ **दिव उत्** ।६।१।१३१। पदान्ते। सुद्यु-

---

टिप्प०-१ ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विन्तस्य दुहेः दादेरिति घत्वेन झषन्तत्वेऽपि भष्भावो न स्यात्। दुधिति समुदायस्य यः पूर्वावयवो दु इत्येकाच् तस्य झषन्तत्वाभावात्, उघ् इत्युत्तरावयवे तु बशभावादित्यत आह—व्यपदेशिवद्भावेनेति। २ एत्येधत्यूठ्स्विति विशेषणार्थष्ठकारो हलन्त्यमितीत्संज्ञकः। अत्र भस्येत्यधिक्रियते। वसोः संप्रसारणमित्यतोऽनुवृत्तं संप्रसारणमूठो विशेषणं, तेन अलोऽन्त्यस्येति न भवति तदेतदाह—भस्य वाह इति। ३ एत्येधत्यूठ्स्वित्यनेन। ४ विशेषविहितेनापीत्यनुषज्यते। ५ विधानसामर्थ्यात्सर्वत्राविकृतेन नुमा भवितव्यमिति भाव इति तत्त्वबोधिनी।

भ्यामित्यादि। चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः २॥ **षट्चतुर्भ्यश्च** ।७।१।५५। एभ्य आमो नुडागमः स्यात्॥ **रषाभ्यां नो णः समानपदे** ।८।४।१। चतुर्णाम्॥ **रोः सुपि** ।८।३।१६। रोरेव विसर्जनीयः सुपि[1]। चतुर्षु॥ **मो नो धातोः** ।८।२।६४। पदान्ते प्रशान्। प्रशामौ॥ **किमः कः** ।७।२।१०३। विभक्तौ। कः। कौ। के। इत्यादि॥ **इदमो मः** ।७।२।१०८। सौ। त्यदाद्यत्वापवादः॥ **इदोऽय् पुंसि**[2] ।७।२।१११। इदम इदोय् सौ पुंसि। अयम्। त्यदाद्यत्वे॥ **अतो गुणे** ।६।१।९७। अपदान्तादतो गुणे पररूपमेकादेशः॥ **दश्च** ७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे। त्यदादेः संबोधनं नास्तीत्युत्सर्गः[3]॥ **अनाप्यकः** ।७।२।११२। अककारस्य इदम इदोऽनापि विभक्तौ। आबिति प्रत्याहारः[4]। अनेन॥ **हलि लोपः** ।७।२।११३। अककारस्य इदम इदो लोप आपि हलादौ॥ (नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे[5])॥ **आद्यन्तवदेकस्मिन्**[6] ।१।१।२१। एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात्। सुपि चेति दीर्घः। आभ्याम् ३॥ **नेदमदसोरकोः** ।७।१।११। अककारयोरिदमदसोर्भिस ऐस् न स्यात्। एभिः। अस्मै। एभ्यः २। अस्मात्। अस्य। अनयोः २। एषाम्। अस्मिन्। एषु॥ **द्वितीयाटौस्स्वेनः** ।२।४।३४। इदमेतदोरन्वादेशे। किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः[7]। यथा अनेन व्याकरणमधीतम्। एनं

---

टिप्प०-१ खरवसानयोरित्येव सिद्धेऽयमारम्भो नियमार्थ इत्याह-रोरेवेति। रोः सुप्येव विसर्जनीय इति विपरीतनियमस्त्वत्र न भवति। हलोऽनन्तराः संयोग इत्यादिनिर्देशात्। २ पुंसि किम्। इयं स्त्री। ३ प्रचुरप्रयोगदर्शनमेवात्र मूलम्। ४ टा इत्यारभ्य सुपः पकारेण। ५ नन्वेवं बिभर्ति पिपर्तीत्यादौ भृञामित् अर्तिपिपर्त्योश्चेतीत्वं सर्वस्याभ्यासस्य स्यात्, द्वित्वाभावे केवलस्यार्थवत्त्वेपि द्वित्वे सति समुदायस्यैवार्थवत्त्वादित्याशङ्कायामाह-अनभ्यासविकार इति। ६ सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः, सत्यन्यस्मिन् यस्य परो नास्ति सोऽन्त इति लोके प्रसिद्धम्। तदुभयमेकस्मिन्नसहाये च संभवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते। ७ किंचित्कार्यमिति। अपूर्वं बोधयितुमित्यर्थः। ईषदर्थे क्रियायोग इत्यत्र तु ईषदर्थादयो न विधीयन्ते किंत्वनूद्यन्त इति न तत्रैनादेशः। एतेन 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यपि व्याख्यातम्।

छन्दोऽध्यापयेति। अनयोः पवित्रं कुलम्। एनयोः प्रभूतं स्वमिति। एनम्। एनौ। एनान्। एनेन। एनयोः २। राजा॥ **न ङिसंबुद्ध्योः** ।८।२।८। नस्य लोपो न ङौ संबुद्धौ च। हे राजन्। (ङावुत्तरपदे प्रतिषेधः) ब्रह्मनिष्ठः। राजानौ। राजानः। राजानम्। राजानौ। जञोर्ज्ञः। राज्ञः॥ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति** ।८।२।२। सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धः, नान्यत्र राजाश्वे[1] इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। राजभ्याम्। राजभिः। राजभ्यः। राज्ञि, राजनि। यज्वा। यज्वानौ। यज्वानः॥ **न संयोगाद्वमन्तात्** ।६।४।१३७। वमान्तसंयोगादनोऽकारस्य लोपो न। यज्वनः। यज्वना। यज्वभ्याम्। ब्रह्मणः॥ **इन्हन्पूषार्यम्णां शौ** ।६।४।१२। एषां शावेवोपधाया दीर्घः॥[2] **सौ च** ।६।४।१३। इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ परे। वृत्रहा। हे वृत्रहन्॥ **एकाजुत्तरपदे णः** ।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णत्वं स्यात्। वृत्रहणौ। वृत्रहणः॥ **हो हन्तेर्ञ्णिन्नेषु** ।७।३।५४। ञिति णिति प्रत्यये ने च परे हन्तेर्हस्य कुत्वं स्यात्॥ **हन्तेः** ।८।४।२२। उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णः। प्रहण्यात्॥ **अत्पूर्वस्य** ।८।४।२२। हन्तेरत्पूर्वस्यैव नस्य णः, नान्यस्य। प्रघ्नन्ति। योगविभागसामर्थ्यादनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायं बाधित्वा कुमति चेति णोऽपि निवर्तते। वृत्रघ्नः इत्यादि। एवं शार्ङ्गिन्। यशस्विन्। अर्यमन्। पूषन्॥ **मघवा बहुलम्**[3] ।६।४।१२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्॥ **उगिदचां सर्वनामस्थानेऽधातोः**[4] ।७।१।७०। अधातोरुगितो नलोपि-

---

टिप्प०-१ राजाश्व इत्यादौ सवर्णदीर्घे कर्तव्ये नलोपोऽसिद्धो न भवतीति भावः। २ 'सर्वनामस्थाने चासंबुद्धौ' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह-शावेवेति। उपधादीर्घमात्रस्यायं नियमः। तेन वृत्रहायत इत्यत्र अकृत्सार्वधातुकयोरिति दीर्घो भवत्येव। ३ अर्वणस्त्रसावित्यतस्तृ इत्यनुवर्तते। तदपेक्षा च मघवा इति षष्ठ्यर्थे प्रथमा, तदाह-मघवन्शब्दस्येति। ४ अधातोरिति। अधातुभूतपूर्वस्यापीत्यर्थः। अञ्चतिग्रहणं तु नियमार्थम्। उगितो धातोश्चेद्भवति तर्ह्यञ्चतेरेवेति। एवं च गोमानिवाचरतीति गोमान् इत्यादौ संप्रति धातुत्वेऽपि नुम् भवत्येव।

नोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे। मघवान्। इह उपधादीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति; बहुलग्रहणात्[1]। मघवतौ। मघवतः। मघवता। तृत्वाभावे सुटि राजवत्॥ **श्वयुवमघोनामतद्धिते** ।६।४।१३३। अन्नन्तानामेषामतद्धिते परे संप्रसारणं स्यात्। मघोनः। मघवभ्यामित्यादि। एवं श्वन्, युवन्॥ **न संप्रसारणे संप्रसारणम्** ।६।१।३७। यूनः। युवभ्यामित्यादि। अर्वा। हे अर्वन्॥ **अर्वणस्त्रसावनञः** ।६।४।१२७। नञा रहितस्यार्वन्नन्त्यस्य 'तृ' इत्यन्तादेशः, न तु सौ। अर्वन्तौ। अर्वन्तः। अर्वतः। अर्वद्भ्याम्॥ **पथिमथ्यृभुक्षामात्** ।७।१।८५। सौ॥ **इतोऽत्सर्वनामस्थाने** ।७।१।८६। पथ्यादेः॥ **थो न्थः**[2] ।७।१।८७। पथि[3]मथोस्थस्य न्थादेशः सर्वनामस्थाने। पन्थाः। हे पन्थाः। पन्थानौ। पन्थानः॥ **भस्य टेर्लोपः** ।७।१।८८। पथ्यादेः। पथः। पथिभ्याम्। पथिभ्यः। एवं मन्थाः। ऋभुक्षाः॥ **[4]ष्णान्ता षट्** ।१।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। पञ्च २। पञ्चभिः। पट्चतुर्भ्यश्चेति नुट्॥ **नोप[5]धायाः** ।६।४।७। नान्तस्योपधाया दीर्घो नामि। पञ्चानाम्। पञ्चसु॥ **अष्टन आ विभक्तौ** ।७।२।८४। हलादौ वा[6] स्यात्॥ **[7]अष्टाभ्य औश्** ।७।१।२१। कृताकारादष्टनो जस्शसोरौश्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जस्शसोर्विषये आत्वं ज्ञापयति। अष्टौ २। अष्टाभिः। अष्टाभ्यः २। अष्टानाम्। अष्टासु। आत्वाभावे—अष्ट। पञ्चवत्। **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः क्विन् अञ्चेः सुप्युपपदे युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ।

---

टिप्प०—१ क्वचिदन्यदेवेत्यर्थकादित्यर्थः। बहूनर्थान् लातीति बहुलम्। २ यो नुडिति नोक्तं इत्संज्ञाधन्तावित्यनुसंधानेन प्रक्रियालाघवाभावात्। ३ स्थान्यादेशौ द्वावप्यनच्कौ। थेन्थः इत्येव सिद्धे इतोत्सर्वनामस्थाने इत्येतदृभुक्षिन्नर्थम्। ४ स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम्। ५ नेति लुप्तषष्ठीकमङ्गस्य विशेषणम्। नलोपस्यासिद्धत्वात् नामीति दीर्घो न प्रवर्तते इत्ययमारम्भः। ६ वैकल्पिकं चेदमात्वम्। अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणाज्ज्ञापकात्। ७ अष्टाभ्य इति कृतात्वस्येदमनुकरणं न तु लक्षणवशसंपन्नमात्वं, तथा हि सति तु वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थं अष्टभ्य इत्येव ब्रूयादिति भावः।

**कृदतिङ्** ।३।१।९३। अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः ॥ **वेरपृक्तस्य** ।६।१।६७। लोपः ॥ **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो यस्मात्[1]तस्य कवर्गोऽन्तादेशः पदान्ते । ऋत्विक्, ऋत्विग् । ऋत्विग्भ्याम् ॥ **युजेरसमासे** ।७।१।७१। सर्वनामस्थाने नुम् । सुलोपः, संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् । युञ्जौ । युञ्जः । युग्भ्याम् । असमासे किम्? सुयुग् ॥ **चोः कुः** ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक्[2] । सुयुजौ । सुयुजः । सुयुग्भ्याम् । खन् । खञ्जौ । खञ्जः । खन्भ्याम् ॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** ।८।२।३६। झलि पदान्ते च जश्त्वचर्त्वे । राट्, राड् । राजौ । राजः । राड्भ्याम् । एवम् । विभ्राट् । देवेट् । विश्वसृट् । परिमृट् ॥ **'परौ व्रजेः षः पदान्ते'** । पराबुपपदे व्रजेः क्विप् दीर्घश्च पदान्ते षत्वमपि । परित्यज्य सर्वं व्रजतीति परिव्राट् । परिव्राजौ ॥ **विश्वस्य वसुराटोः**[3] ।६।३।१२८। विश्वस्य दीर्घः स्याद्वसौ राट्शब्दे च परे । राडिति पदान्तोपलक्षणार्थम् । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ॥ **स्कोः संयोगाद्योरन्ते च** ।८।२।२९। पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलां जश्झशीति शस्य जः । भृज्जौ । भृज्जः । भृड्भ्याम् । त्यदाद्यत्वं पररूपत्वं च ॥ **तदोः सः सावनन्त्ययोः** ।७।२।१०६। त्यदादीनां तकारदकारयोः सः स्यात्सौ । स्यः । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते । एनम् । एनौ । एनान् । एनेन । एनयोः ॥ **ङेप्रथमयोरम्** ।७।१।२८। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ॥ **त्वाहौ सौ** ।७।२।९४। अनयोर्मपर्यन्तस्य ॥ **शेषे[4] लोपः** ।७।२।९०। अनयोष्टिलोपः । त्वम् । अहम् ॥ **युवावौ द्विवचने** ।७।२।९२। द्वयो-

---

टिप्प०—१ क्विनः कुः इत्युक्तेऽपि प्रत्ययग्रहणे तदन्तग्रहणात् क्विन्नन्तस्य ग्रहणे सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे—क्विन्प्रत्ययो यस्मादिति । २ सुष्ठु युनक्तीति विग्रहे सत्सूद्विषेति क्विप् । ३ रट्धातोर्णिचि क्विपि निष्पन्नराट्शब्दस्य तु नेह ग्रहणम् । सुप्रसिद्धत्वेन वसुशब्दसाहचर्येण चैश्वर्यसंबन्ध्यर्थप्रतिपादकस्य राजतिनिष्पन्नस्यैव ग्रहणात् । 'आदीत्यविश्ववसव' इत्यत्र तु विश्वशब्दस्य पूर्वपदत्वाभावान्न दीर्घः । ४ उक्तादन्यः शेषः, आत्वं यत्वं च प्रागुक्तं, तद्विषयादन्यविभक्तिः शेषशब्दार्थः ।

रुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।८८। औङ्येतयोरात्वं लोके । युवाम् । आवाम् ॥ **यूयवयौ जसि** ।७।२।९३। अनयोर्मपर्यन्तस्य । यूयम् । वयम् ॥ **त्वमावेकवचने** ।७।२।९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायां च** ।७।२।८७। अनयोरात्स्यात् । त्वाम् । माम् ॥ **शसो न** ।७।१।२९। आभ्यां शसो नः । अमोपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान् । अस्मान् ॥ **योऽचि** ।७।२।८९। अनयोर्यादेशोऽनादेशेऽजादौ विभक्तौ । त्वया । मया ॥ **युष्मदस्मदोरनादेशे** ।७।२।८६। अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥ **तुभ्यमह्यौ ङयि** ।७।२।९५। अनयोर्मपर्यन्तस्य । टिलोपः । तुभ्यम् । मह्यम् ॥ **भ्यसो भ्यम्** ।७।१।३०। आभ्यां परस्य । युष्मभ्यम् । अस्मभ्यम् ॥ **एकवचनस्य च** ।७।१।३२। आभ्यां ङसेरत् । त्वत् । मत् ॥ **पञ्चम्या अत्** ।७।१।३१। आभ्यां भ्यसः । युष्मत् । अस्मत् ॥ **तवममौ ङसि** ।७।२।९६। अनयोर्मपर्यन्तस्य ॥ **युष्मदस्मद्भ्यां ङसोऽश्**[२] ।७।१।२७। तव । मम । युवयोः २ । आवयोः २ ॥ **साम आकम्** ।७।१।३३। आभ्यां साम आकम् । युष्माकम् । अस्माकम् । त्वयि । मयि । युष्मासु । अस्मासु ॥ **युष्मदस्मदोः**[३] **षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ** ।८।१।२०। पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वान्नावौ ॥ **बहुवचनस्य वस्नसौ** ।८।१।२१। उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥ **तेमयावेकवचनस्य** ।८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥ **त्वामौ द्वितीयायाः** ।८।१।२३। उक्तविधयोर्द्वितीयैकवचनान्तयोस्त्वामौ स्तः ॥

---

टिप्प०–१ अत्रापि विभक्ताविति संबध्यते । अत एव प्रत्ययोत्तरेति सूत्रं सार्थकम् । तत्फलं तु त्वं सुन्दरः पुत्रो यस्येति त्रिपदे बहुव्रीहौ नादेश इति । २ शित्वं सर्वादेशार्थं । अन्यथा आदेः परस्येति स्यात् । ३ एतत्पूर्वपदस्य, पदात्, अनुदात्तं सर्वमपादादौ, इत्येतत्सूत्रत्रयाधिकारः ।

श्री[1]शस्त्वाऽवतु माऽपीह, दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥ १ ॥
सुखं वां नौ ददात्वीशः, पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो, दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥

(एक[2]वाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः) । एकतिङ् वाक्यम् । तेनेह न–ओदनं पच तव भविष्यति । इह तु स्यादेव–शालीनां ते ओदनं दास्यामि । (एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः । अन्वादेशे तु नित्यं स्युः) । धाता ते भक्तोऽस्ति, तव भक्तोऽस्तीति वा । तस्मै ते नम इत्येव ॥ **न चवाहाहैव युक्ते** ।८।१।२४। चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि ॥ **पश्यार्थैश्चानालोचने** ।८।१।२५। अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते आदेशाः स्युः । चेतसा त्वां समीक्षते । आलोचने तु–भक्तस्त्वा पश्यति चक्षुषा ॥ **[3]सपूर्वायाः प्रथमाया विभाषा** ।८।१।२६। विद्यमानपूर्वात्प्रथमान्तादन्वादेशेऽप्येते आदेशा वा स्युः । [4]भक्तस्त्वमप्यहं, तेन हरिस्त्वां त्रायते स माम् । त्वा मेति वा ॥ **[5]साऽऽमन्त्रितम्** ।२।३।४८। संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ॥ **आमन्त्रितं पूर्वमविद्यमानवत्** । ८।१।७२। अग्ने तव । देवास्मान्पाहि ॥ **नामन्त्रिते समानाधिकरणे सामान्यवचनम्** ।८।१।७३। विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत् । हरे दयालो नः पाहि । सुपात्, सुपाद् । सुपादौ ॥ **पादः पत्** ।६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः । सु-

---

टिप्प०–१ अस्मिन्पद्यद्वयेऽनुक्रमेण द्वितीयाचतुर्थीषष्ठीनामेकवचनस्य तत आसामेव द्विवचनस्य ततो बहुवचनस्योदाहरणानीति ज्ञेयम् । २ सिद्धान्तकौमुद्यां तु समानवाक्ये इत्यस्ति तदर्थ एवात्र एकवाक्ये इति पठितोऽस्ति । ३ सहशब्दोऽत्र सलोमक इत्यत्रेव विद्यमानवचनः । तेन सहेतीत्यत्र तुल्ययोगवचनं प्रायिकमिति वक्ष्यमाणत्वाद्विद्यमानवचनस्यापि सहस्य समासः । वोपसर्जनस्येति सभावः । ४ त्वं भक्तोऽहमिति तेन हरिस्त्वां मां च त्रायत इति संबन्धः । ५ सा इत्यनेन प्रथमा निर्दिश्यते ।

पदः । सुपाद्भ्याम् । अग्निमत्, अग्निमद् । अग्निमथौ । अग्निमद्भ्याम् ॥ **अनिदितां हल उपधायाः क्ङिति** ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति च । उगिद्चामिति नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः ॥ [१]**अचः** ।६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः ॥ **चौ** ।६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः । प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ् । प्रत्यञ्चौ । प्रतीचः । प्रत्यग्भ्याम् । उदङ् । उदञ्चौ ॥ **उद ईत्** ।६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् । उदीचः । उदीचा । उदग्भ्याम् ॥ [२]**समः समि** ।६।३।९३। अप्रत्ययान्तेऽञ्चतौ परे । सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ॥ **सहस्य सध्रिः** ।६।३।९५। तथा । सध्र्यङ । सध्र्यञ्चौ । सध्रीचः । सध्र्यग्भ्याम् ॥ **तिरसस्तिर्यलोपे** ।६।३।९४। अलुप्ताकारेऽञ्चतौ अप्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् ॥ **नाञ्चेः पूजायाम्** ।६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न । प्राङ् । प्राञ्चौ । नलोपाभावादलोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु, प्राङ्क्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्याम् । पयोमुक्, पयोमुग् । पयोमुचौ । पयोमुचः । पयोमुग्भ्याम् । मह पूजायाम् । 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' । एते [३]निपात्यन्ते । शतृवच्चैषां कार्यं स्यात् । उगित्वान्नुम् ॥ **सान्तमहतः संयोगस्य** ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महतः । महद्भ्याम् ॥ **अत्वसन्तस्य [४]चाधातोः** ।६।४।१४। अत्वन्तस्योपधाया

---

टिप्प०-१ अत्र अजिति न प्रत्याहारः । आतो धातोरित्यारम्भात्, प्रतीचो यदिति निर्देशाच्च । अत एव पचाद्यचो न ग्रहणम् । २ समो मिङ्, सम इक इति च नासूत्रि । परिभाषाज्ञानगौरवपरिहारार्थत्वात् । ३ निपात्यन्त इति । पृषु सेचने, मह पूजायाम्, बृह वृद्धौ, अत्र गुणाभावः । महेः कर्मणि प्रत्ययः । अत एव महानित्यत्र महते पूज्यते स महानिति विग्रहः । बृहेर्वृद्ध्यभावः । गमेस्तु जगादेशश्च चत्वारोऽप्यतिप्रत्ययान्ताः । ४ अधातोरिति योगो विभज्यते, तत्सामर्थ्यादनन्तरस्यासन्तस्यैव प्रतिषेधः नत्वत्वन्तस्येति तदेतद्दर्शयति धातुभिन्नासन्तस्य चेति ।

दीर्घो धातुभिन्नासन्तस्य चासंबुद्धौ सौ । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । भातेर्डवतुः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । शत्रन्तस्य तु भवन् ॥ **उभे अभ्यस्तम्** ।६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे [1]समुदिते अभ्यस्तसंज्ञे स्तः ॥ **नाभ्यस्ताच्छतुः** ।७।१।७८। नुम् न । ददत् । ददतौ ॥ **जक्षि[2]त्यादयः षट्** ।६।१।६। षट् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः । जक्षत् । जक्षतौ । जक्षतः । एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिना तुल्ये । एतौ छान्दसौ दीध्यत् । वेव्यत् ॥

जक्षि जागृ दरिद्रा शास् दीधीङ् वेवीङ् चकास्तथा ।
अभ्यस्तसंज्ञा विज्ञेया धातवो मुनिभाषिताः ॥ १ ॥

गुप्, गुब् । गुपौ । गुपः । गुब्भ्याम् ॥ **त्यदादिषु दृशोऽनालोचने कञ्च** ।३।२।६०। त्यदादिषूपपदेषु अज्ञानार्थाद्दृशेर्धातोः कञ् स्यात्, चात्क्विन् । **आ सर्वनाम्नः** ।६।३।९१। दृग्दृशवतुषु । तादृक्, तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे–विट्, विड् । विशौ । विशः । विड्भ्याम् ॥ [3]**नशेर्वा** ।८।२।६३। नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक्, नग्, नट्, नड् । नशौ । नशः । नड्भ्याम् नग्भ्याम् ॥ **स्पृशोऽनुदके क्विन्** ।३।२।५८। अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्, घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । दधृक्, दधृग् । दधृषौ । दधृषः । दधृग्भ्याम् । रत्नमुट्, रत्नमुड् । रत्नमुषौ । रत्नमुषः । रत्नमुड्भ्याम् । षट्, षड् । षड्भिः । षड्भ्यः । षण्णाम् षट्त्सु, षट्सु । यत्तु प्राचा षण्णां [4]षँड्णामित्युदाहृतं तत्प्रामादि-

टिप्प०–१ द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्टे–उभे समुदिते इति। २ जक्ष् इति पृथक्पदम् । इतिशब्देन जक्षिरेव परामृश्यते इति आदिर्येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिस्तदेतदाह—षड्धातवोऽन्ये जक्षितिश्च सप्तम इति । ३ केचिदिह झलीत्यनुवर्त्य झलि पदान्ते चेति व्याचक्षते,—तन्न; नष्टमित्यादावतिप्रसङ्गात् । ४ अत्र यरोऽनुनासिकेऽनुनासिको वा इति विकल्पं बाधित्वा प्रत्यये भाषायां नित्यमिति वचनान्नित्यमनुनासिकः

कमेव; प्रत्यये नित्यवचनात् ॥ **वोरुपधाया दीर्घ इकः ।८।२।७६।** रेफवान्तस्य धातोरुपधाया इको दीर्घः पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् ॥ **नुम्विसर्जनीयशर्व्यवायेऽपि ।८।३।५८।** एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु, पिपठीःषु । चिकीः । चिकीर्षौ । चिकीर्षः । विद्वान् । विद्वांसौ । हे विद्वन् ॥ **वसोः संप्रसारणम् ।६।४।१३१।** वस्वन्तस्य भस्य संप्रसारणम् । विदुषः । वसुस्रंस्विति दत्वम् । विद्वद्भ्याम् ॥ **पुंसोऽसुङ् ।७।१।८९।** सर्वनामस्थाने । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुंभ्याम् । पुंसु । ऋदुशनेत्यनङ् । उशना । उशनसौ । (अस्य संबुद्धौ वाऽनङ् नलोपश्च वा वाच्यः) । हे उशन । हे उशनन्, हे उशनः । उशनोभ्याम् । अनेहा । अनेहसौ । अनेहसः । हे अनेहः । वेधाः । वेधसौ । वेधसः । वेधोभ्याम् ॥ **अदस औ सुलोपश्च ।७।२।१०७।** सौ परे । तदोरिति सः । असौ ॥ **'औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च'** । असकौ । असुकः । त्यदाद्यत्वं पररूपत्वम् । वृद्धिः ॥ **अदसोऽसेर्दादु दो मः ।८।२।८०।** अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरम्याद्ध्रस्वस्य उः । दीर्घस्य ऊः । अमू । जसः शी ॥ **एत ईद्बहुवचने ।८।२।८१।** अदसो दात् परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे । अमुम् । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥ **न मु ने ।८।२।३।** नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना । अमूभ्याम् । अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ॥ **इति हलन्तपुंलिङ्गाः** ॥

---

**टिप्प०**–१ असंबुद्धावित्युक्तेः सान्त इति न दीर्घः । २ वशेः कनसिः, ग्रहिज्येति संप्रसारणम् । ३ औत्वाभावे त्यदाद्यत्वं सादुत्वम् । ४ ने इति विषयसप्तमीत्याह—नाभावे कर्तव्य इति । अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे सुपि चेति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह—कृते चेति । एतच्च ने इत्यस्यावृत्त्या लभ्यते एकत्र विषयसप्तमी, अपरत्र तु सतिसप्तमीत्याश्रयणात् ।

## अथ हलन्तस्त्रीलिङ्गाः।

**नहो धः** ।८।२।३४। झलि पदान्ते च ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेष्वेषु पूर्वस्याणो दीर्घः । उपानत् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । क्विन्नन्तत्वात्कुत्वेन हस्य घः । जश्त्वचर्त्वे । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् । द्यौः । दिवौ । दिवः । द्युभ्याम् । गीः । गिरौ । गिरः । एवं पूः । चतस्रः । चतसृभिः । चतसृभ्यः । चतसृणाम् । चतसृषु । का । के । काः । सर्वावत् ॥ **यः सौ** ।७।२।११०। इदमो दस्य । 'इदमो मः' । इयम् । त्यदाद्यत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः २ । अनयोः २ । आसाम् । अस्याम् । आसु । स्रक् । स्रग् । स्रजौ । स्रजः, स्रग्भ्याम् । त्यदाद्यत्वे टाप् । स्या । त्ये । त्याः । एवं तद् । यद् । एतद् । वाक्, वाग् । वाचौ । वाचः । वाग्भ्याम् ३ । अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः । अपः ॥ **अपो भि** ।७।४।४८। अपस्तकारो भादौ प्रत्यये । अद्भिः । अद्भ्यः । अपाम् । अप्सु । दिक्, दिग् । दिशौ । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग् । दृशौ । दृशः । दृग्भ्याम् । त्विट्, त्विड् । त्विषौ । त्विषः । त्विड्भ्याम् । ससजुषोरिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् । आशीः । आशिषौ । आशीर्भ्याम् । असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्यै । अमूभ्यः । अमुष्याः २ । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु । इति हलन्तस्त्रीलिङ्गाः ॥

## अथ हलन्तनपुंसकलिङ्गाः।

स्वमोर्लुक् । दत्वम् । स्वनडुत् स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । वारि । वारा । वार्भ्याम् । चत्वारि ।

टिप्प०–१ उत्तरपदेष्विति शेषः । २ उपपूर्वान्नहेः संपदादित्वात्क्विप् । नहिवृतीति पूर्वपदस्य दीर्घः । ३ न तिसृचतसृ इति न दीर्घः । ४ आशासः क्वावुपसंख्यानमित्युपधाया इत्वम् । ५ वसुस्रंस्विति दत्वमनडुच्छब्दान्तेऽपि प्रवर्तते ; पदाधिकारस्थत्वादिति भावः ।

किम् । के । कानि । इदम् । इमे । इमानि । (अन्वादेशे नपुंसके एनद्वक्तव्यः)[1] । एनत् । एने । एनानि । एनेन । एनयोः २ । व्योम । व्योम्नी । व्योमनी । व्योमानि । ब्रह्म । (संबुद्धौ नपुंसकानां नलोपो वा वाच्यः) हे ब्रह्म, हे ब्रह्मन् । हे ब्रह्मणी । हे ब्रह्माणि । 'रोऽसुपि' । अहः । 'विभाषा ङिश्योः' । अह्नी, अहनी । अहानि ॥ अहन् ।८।२।६८। अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । सुपथि । टिलोपः । सुपथी । सुपन्थानि । ऊर्क्, ऊर्ग् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः । त्यत्, त्यद् । त्ये । त्यानि । तत्, तद् । ते । तानि । यत्, यद् । ये । यानि । एतत्, एतद् । एते । एतानि । अवङ् स्फोटायनस्येति अवङ् ।

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः[2] ।
असंध्यवङ्पूर्वरूपैर्नवाधिकशतं[3] मतम् ॥ १ ॥
स्वमुसुप्सु नव, षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥

गवाक्, गवाग् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती । शकृन्ति । ददत् । ददती ॥ वा नपुंसकस्य ।७।१।७९। अभ्यस्तात्परो यः शतुरवयवस्तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने । ददन्ति, ददति । तुदत् ॥ आच्छीनद्योर्नुम् ७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती, तुदती । तुदन्ति । भात् । भान्ती, भाती । भान्ति । पचत् ॥ शप्श्यनोर्नित्यम् ।७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् शीनद्योः । पचन्ती । दीव्यत् । दीव्यन्ती । धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पयः । पयसी । पयांसि । पयोभ्याम् । सुपुम् । सुपुंसी । सुपुमांसि । अदः । विभक्तिकार्यम् उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ इति हलन्तनपुंसकलिङ्गाः ॥

---

टिप्प०—१ अम्येवेदं विधीयते नत्वौङ्शसादिषु फलाभावात् । २ पूजार्थगत्यर्थभेदेनासंध्यवङादिभिर्नवाधिकशतं रूपाणि बोध्यानीत्यर्थः । ३ इह 'चयो द्वितीया' इति वार्तिकमनाश्रित्य नवाधिकशतं बोध्यम् । तदाश्रयणे तु त्रीणि रूपाणि वर्धन्त एव ।

## अथाऽव्ययानि ।

**स्वरादिनिपातमव्ययम्** ।१।१।३७। स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, अवस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा, सामि, वत्, ब्राह्मणवत्, क्षत्रियवत्, सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वाहा, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अम्, आम्, प्रतान्, प्रशान्, प्रतान्, मा, माङ्, आकृतिगणोऽयम्, च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्, चण्, कच्चित्, किंचित्, यत्र, नह, हन्त, माकिम्, माकिः, नकिम्, नकिः, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्[३], वौषट्, स्वाहा, स्वधा, अलम्, वषट्, तुम्, तथाहि, खलु, किल, अथ, सुष्ठु, स्म, आदह, उपसर्गविभक्तिस्वरप्रतिरूपकाश्च, अवदत्तम्, अहंयुः, अस्तिक्षीरा, अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, पशु, शुकम्, यथाकथाच, पाट्, प्याट्, अङ्ग, है, हे, भोः, अये, द्य, विषु, एकपदे,

---

टिप्प०–१ स्वरादयश्च निपाताश्चेति समाहारद्वन्द्वः । २ तेनान्येऽपि ज्ञेयाः । तथा हि कामम् । प्रकामम् । भूयः । सांप्रतम् । परम् । साक्षात् । साचि । सत्यम् । मङ्क्षु । आशु । संवत् । अवश्यम् । उषा । ओम् । भूः । भुवः । झटिति । झगिति । तरसा । सुष्ठु । दुष्ठु । सु । अदस् । कु । अञ्जसा । मिथु । अस्तम् । स्थाने । वरम् । सुदि । वदि । इत्यादि । ३ एतेषामनेकाचामुभयत्र पाठः स्वरभेदार्थः ।

श्रुत्, आतः, चादिरप्याकृतिगणः ॥ **तद्धितश्चासर्वविभक्तिः** ।१।१।३८। यस्मात्सर्वा विभक्तिर्नोत्पद्यते[1] स तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्तव्यम्—तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक् समासान्तेभ्यः, अम्, आम्, कृत्वोर्थाः, तसिवती, नानाञौ । इति । एतदन्तमव्ययम् । अत इत्यादि ॥ **कृन्मेजन्तः**[2] ।१।१।३९। कृद्यो मान्त एजदन्तश्च तदन्तमव्ययम् । स्मारंस्मारम्[3] । जीवसे[4] । पिबध्यै ॥ **क्त्वातोसुन् कसुनः** ।१।१।४०। एतदन्तमव्ययम् । कृत्वा[5] । उदेतोः । विसृपः ॥ **अव्ययीभावश्च** ।१।१।४१। अधिहरि ॥ **अव्ययादाप्सुपः** ।२।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति, तथापि न गौणे । आब्ग्रहणं व्यर्थम् । अव्ययस्यालिङ्गत्वात् । तथा च श्रुतिः ।

सदृशं[6] त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥
वष्टि[7] भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥

वगाहः, अवगाहः । पिधानम्, अपिधानम् । **इत्यव्ययानि ॥**

इति सुबन्तं समाप्तम् ॥ ॥

---

टिप्प०–१ किंत्वेकवचनमेवोत्पद्यत इति भावः । २ अत्र मेजन्त इत्येतच्छ्रुतत्वात्कृत एव विशेषणं, न तु कृदन्तस्याश्रुतस्य । ३ स्मरतेः आभीक्ष्ण्ये णमुल् च इति णमुल् । वृद्धिः रपरत्वम् । नित्यवीप्सयोरिति द्वित्वम् । ४ तुमर्थे सेसेनित्यसेप्रत्ययः । पिबध्यै इति तुमर्थे इत्यनेनैव शध्यै प्रत्ययः । पाघ्रा इति पिबादेशः । ५ कृत्वेति समानकर्तृकयोः इत्यादिना क्त्वा । उदेतोरिति उत्पूर्वादिणो भावलक्षणेस्थेण् इत्यादिना तोसुन् । विसृप इति सृपितृदोः कसुन् । ६ अलिङ्गत्वे अथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह—सदृशमिति । एतेषु यन्न व्येति किंतु सदृशमेकप्रकारं तदव्ययमिति योजना । यद्वा यस्मान्न व्येति तदव्ययम् । ७ अव्ययविशेषे कार्यान्तरमाह—वष्टीति । भागुरिराचार्यः अव उपसर्गस्य अपि उपसर्गस्य च पूर्वाकारस्य च्छति तथा वाक् निश् दिशादिहलन्तशब्दानामापमिच्छति ।

# तिङन्तं प्रारभ्यते।

## तिङन्ते भ्वादयः।

श्रीः॥ लट्। लिट्। लुट्। लृट्। लेट्। लोट्। लङ्। लिङ्। लुङ्। लृङ्। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः॥ **लः कर्मणि च भावे चाकर्मकेभ्यः** ।३।४।६९। लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च॥ **वर्तमाने लट्** ।३।२।१२३। वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्वम्। भू सत्तायाम्। कर्तृविवक्षायाम् भू ल् इति स्थिते॥ **तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्** ।३।४।७८। एतेऽष्टादश लादेशाः स्युः॥ **लः परस्मैपदम्** ।१।४।९९। लादेशाः परस्मैपदसंज्ञाः स्युः॥ **तङानावात्मनेपदम्** ।१।४।१००। तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्वसंज्ञापवादः॥ **अनुदात्तङित आत्मनेपदम्** ।१।३।१२। अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्॥ **स्वरितञितः कर्त्रभिप्राये क्रियाफले** ।१।३।७२। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले॥ **शेषात्कर्तरि परस्मैपदम्** ।१।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि लस्य परस्मैपदं स्यात्॥ **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** ।१।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः॥ **तान्येकवचनद्विवचनबहुवचनान्येकशः** ।१।४।१०२। लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि

---

टिप्प०-१ ल इतीदमुच्चारणार्थाकारेण सह जातावेकवचनम्। लस्येत्यत्र तथा दृष्टत्वात्। २ फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्। ३ फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। ४ तिप्तस्झीति समाहारद्वन्द्वः। ५ क्रियाफलं च यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव नतु दक्षिणारूपम्।

प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः** ।१।४।१०५। तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः ॥ **अस्मद्युत्तमः** ।१।४।१०७। तथाभूतेऽस्मद्युत्तमः ॥ **शेषे प्रथमः** ।१।४।१०८। मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ॥ **तिङ्शित्सार्वधातुकम्** ।३।४।११३। तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप्** ।३।१।६८। कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥ **सार्वधातुकार्धधातुकयोः** ।७।३।८४। अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ॥ **झोऽन्तः** ।७।१।३। प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ॥ **अतो दीर्घो यञि** ।७।३।१०१। अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥ **शेषे विभाषाऽकखादावषान्त उपदेशे** ।८।४।१८। उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातावुपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात् । प्रणिभवति ॥ **परोक्षे लिट्** ।३।२।११५। भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट स्यात् । लस्य तिबादयः ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** ।३।४।८२। लिटस्तिबादीनां णलादयः स्युः ॥ भू अ इति स्थिते ॥ **भुवो वुग्लुङ्लिटोः** ।६।४।८८। भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥ **लिटि धातोरनभ्यासस्य** ।६।१।८। लिटि परेऽनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥ **पूर्वोऽभ्यासः** ।६।१।४। अत्र ये द्वे तयोः ॥ **हलादिः शेषः**

---

टिप्प०-१ उपोच्चरितं पदमुपपदं नतु कृत्रिमम् । तस्येहानुपयोगादप्राप्तेश्च । २ समानाधिकरणे इत्यस्य व्याख्यानं तिङ्वाच्यकारकवाचिनीति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिसामानाधिकरण्यम् । स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमान इति । ३ व्यतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः तद्भिन्नोऽनद्यतनः । ४ आदिभूतादिति । अनेन च अधिकारसूत्रे द्वितीयस्येति न कर्तव्यमिति ध्वनितम् ।

।७।४।६०। अभ्यासस्य[1]आदिर्हल् शिष्यतेऽन्ये[2] हलो लुप्यन्ते ॥ **ह्रस्वः** ।७।४।५९। अभ्यासस्याचः ॥ **भवतेरः** ।७।४।७३। भवतेरभ्यासोकारस्य अः स्याल्लिटि ॥ **अभ्यासे चर्च** ।८।४।५४। अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चर इति विवेकः । बभूवतुः । बभूवुः ॥ **लिट् च** ।३।४।११५। लिडादेशस्तिङार्धधातुकसंज्ञः स्यात् ॥ **आर्धधातुकस्येड्वलादेः** ।७।२।३५। बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ॥ **अनद्यतने लुट्** ।३।३।१५। भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ॥ **स्यतासी लृलुटोः** ।३।१।३३। धातोरेतौ स्तो लृलुटोः परतः । शबाद्यपवादः । लृ इति लङ्लृटोर्ग्रहणम् ॥ **आर्धधातुकं शेषः** ।३।४।११४। तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥ **लुटः प्रथमस्य डारौरसः** ।२।४।८५। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥ **तासस्त्योर्लोपः** ।७।४।५०। सादौ प्रत्यये ॥ **रि च** ।७।४।५१। रादौ प्रत्यये तथा । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥ **लृट् शेषे च** ।३।३।१३। भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां[3] च । इट्, भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ॥ **लोट् च** ।३।३।१६२। विध्यादिष्वर्थेषु[4] धातोर्लोट् ॥ **आशिषि लिङ्लोटौ** ।३।३।१७३ ॥ **एरुः** ।३।४।८६। लोट इकारस्य उः । भवतु ॥ **तुह्योस्तातङाशिष्यन्यतरस्याम्** ।७।१।३५। आशिषि तुह्योः । परत्वात्सर्वादेशः । ननु ङित्वेत्यस्य क्वावकाश इति चेच्छृणु । अनन्यार्थङकारयुक्तानङादिष्विति गृहाण । भवतात् ॥ **लोटो लङ्वत्** ।३।४।८५। लोटस्तामादयः सलोपश्च ॥ **तस्थस्थमिपां तांतंतामः** ।३।४।१०१। ङितश्चतुर्णां तामादयः स्युः । भवताम् ॥

---

टिप्प०–१ अभ्यासस्येति जातिपरो निर्देशः । तेन आततुः । आटतुः । इत्यादौ तकारादिनिवृत्तिः सिध्यति । २ अन्ये इति । इतरनिवृत्तिपूर्वकावस्थानस्य शेषशब्दार्थत्वादिदमुक्तम् । ३ तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति प्रागुक्तं ततोऽन्यः शेष इत्याह–असत्यामिति । ४ विधिनिमन्त्रणेत्याद्यनुवर्तते तदाह–विध्यादिष्विति ।

भवन्तु ॥ **सेर्ह्यपिच्च** ।३।४।८७। लोटः सेर्हिः सोऽपिच्च ॥ **अतो हेः** ।६।४।१०५। लुक् । भव । भवतात् । भवतम् । भवत ॥ **मेर्निः** ।३।४।८९। लोटः ॥ **आडुत्तमस्य पिच्च** ।३।४।९२। लोडुत्तमस्याट् स पिच्च । हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात् । भवानि ॥ **ते प्राग्धातोः** ।१।४।८०। ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट्** ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । (दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) दुःस्थितिः । दुर्भवानि । (अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्) । अन्तर्भवाणि ॥ **नित्यं ङितः** ।३।४।९९। सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ॥ **अनद्यतने लङ्** ।३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ।६।४।७१। एष्वङ्गस्याट् ॥ **इतश्च** ।३।४।१००। ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्** ।३।३।१६१। एष्वर्थेषु धातोर्लिङ् ॥ **यासुट् परस्मैपदेषूदात्तो ङिच्च** ।३।४।१०३। लिङः परस्मैपदानां यासुडागमो ङिच्च । ङित्त्वोक्तेर्ज्ञायते—क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । तेन वक्ष्यमाणेत्यत्र ङीन्न ॥ **लिङः सलोपोऽनन्त्यस्य** ।७।२।७९। सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते ॥

---

टिप्प०—१ भवतादिति । लुगपेक्षया परत्वाड्डेस्तातङ् । अन्तरङ्गानपीति न्यायस्तु ज्ञापकसिद्धत्वादनित्य इति शब्देन्दुशेखरे । २ निलोट् इत्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्यानित्यतां ज्ञापयितुम् । तेन—सागरं तर्तुकामस्य जप्त्वा स्तोत्रमित्यादि सिध्यति । ३ अनद्यतन इत्ययं बहुव्रीहिः । तेन अद्य श्वो वाऽभुङ्क्ष्महीत्यत्र लुङेव । ४ विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । ५ प्रार्थनं याञ्चा । ६ क्वचिदिति ज्ञापकफलं तु वक्ष्यमाणेत्यादौ टिदुगिल्लक्षणङीवभाव इति टिड्ढतिसूत्र एवोक्तम् ।

**अतो येयः** ।७।२।८०। अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् । गुणः । 'लोपो व्योर्वलि' । भवेत् । भवेताम् ॥ **झेर्जुस्** ।३।४।१०८। लिङः । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥ **लिङाशिषि** ।३।४।११६। आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥ **किदाशिषि** ।३।४।१०४। आशिषि लिङो यासुट् कित् । स्कोरिति सलोपः ॥ **क्ङिति च** ।१।१।५। गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥ **लुङ्** ।३।२।११०। भूतार्थे धातोर्लुङ् ॥ **माङि लुङ्** ।३।३।१७५। सर्वलेकारापवादः ॥ **स्मोत्तरे लङ् च** ।३।३।१७६। स्मोत्तरे माङि लङ् स्याल्लुङ् च ॥ **च्लि लुङि** ।३।१।४३। शवाद्यपवादः ॥ **च्लेः सिच्** ।३।१।४४। **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** ।२।४।७७। लुक् । गापाविह—इणादेशपिबती गृह्येते ॥ **भूसुवोस्तिङि** ।७।३।८८। भू सू एतयोः सार्वधातुके तिङि गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥ **न माङ्योगे** ।६।४।७४। अडाटौ न स्तः । मा भवान्भूत् । मा स्म भवत् । मा स्म भूत् ॥ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ** ।३।३।१३९। हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे धातोर्लृङ् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् । इत्यादि ज्ञेयम् । प्रभवतीत्यादौ उपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—

---

टिप्प०—१ ङित्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे किद्वचनमिज्यादित्यादौ संप्रसारणार्थम्, जागर्यादित्यत्र गुणार्थं च । जागर्तेर्गुणो हि ङिति पर्युदस्यते । ङित्त्वं चेह विशेषविहितेन कित्त्वेन बाध्यते । २ मास्त्वित्यादौ निषेधार्थकमाशब्दोऽन्य एव, नतु माङित्याहुः । ३ अत्र पितीत्यस्यानुवर्तनाननुवर्तनयोः फलदोषयोरभावेन तदनुक्तिः ।

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥

इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादौ उत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति, पराभवति, संभवति, अनुभवति, अभिभवति, उद्भवति, परिभवति—इत्यादौ विलक्षणार्थावगतेः । उक्तं च—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥ १ ॥ इति ।

अत सातत्यगमने । अतति । अततः । अतन्ति । अतसि । अतथः । अतथ । अतामि । अतावः । अतामः ॥ **अत आदेः** ।७।४।७०। अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ॥ **आडजादीनाम्** ।६।४।७२। अजादेराडागमः स्यात् लुङ्–लङ्–लृङ्क्षु । आतत् । अतेत् । अत्यात् । लुङि सिचि इडागमे कृते ॥ **अस्तिसिचोऽपृक्ते** ।७।३।९६। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः । **इट ईटि** ।८।२।२८। इटः परस्य सस्य लोपः स्यादीटि । (सिज्लोप एकादेशे सिद्धो वाच्यः)। आतीत् । आतिष्टाम् ॥ **सिजभ्यस्तविदिभ्यश्च** ।३।४।१०९। सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् ।

---

टिप्प०—१ एकपदशब्देनाखण्डं पदं गृह्यते । अखण्डत्वं च पदत्वाभाववदुत्तरखण्डत्वम् । अत एव समासग्रहणं चरितार्थम् । २ उपलक्षणमिति । एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र च कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येवकारो ज्ञापकः । सेधतेर्गतावित्यत्र गतिग्रहणमपि पिध गत्यामित्यादिगत्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते, नान्यथेति दिक् । ३ पररूपपदमेकादेशोपलक्षणम् । आनृजे इत्यादौ गुणस्यैव प्राप्तेः । ४ सिच् च अस् चेति समाहारद्वन्द्वः । सिच्छब्दस्य सौत्रं भत्वम् । अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः सौत्रो लुक् ।

आतिष्व । आतिष्म । आतिष्यत् । एवं अव रक्षणगतिकान्तिप्रीतितृप्त्यव-गमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अव-तीत्यादि ॥ षिध गत्याम् । **पुगन्तलघूपधस्य च** ।७।३।८६। पुगन्तस्य लघू-पधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । पत्वम् । सिषेध ॥ सेकृ सृप्सृस्तृसृजस्तृस्त्यान्ये दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वष्कुस्विद्स्वद्स्वञ्जस्वपूस्मिङः ॥ १ ॥ दन्त्यः केवलदन्त्यो न तु दन्त्योष्ठजोऽपि । ष्वष्कादीनां पृथक् ग्रहणात् ॥ **असंयोगाल्लिट् कित्** ।१।२।५। असंयोगात्परोऽपि लिट् कित्स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । **सात्पदाद्योः** ।८।३।१११। सातेः पदादेश्च सस्य षो न । इति निषेधे प्राप्ते ॥ **उपसर्गात्सुनोतिसुव-तिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** ।८।३।६५। उपसर्ग-स्थान्निमित्तादेषां सस्य षः ॥ **सदिरप्रतेः** ।८।३।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः ॥ **स्तन्भेः** ।८।३।६७। सौत्रस्य षः ॥ **अवाच्चालम्बनाविदूर्ययोः** ।८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः सस्य षः ॥ **वेश्च स्वनो भोजने** ।८।३।६९। व्यवाभ्यां स्वनतेः सस्य षः ॥ **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** ।८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः । निषेधति ॥ **प्राक्सितादड्व्यवा-येऽपि** ।८।३।६३। सितशब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि सस्य षः । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् ॥ **स्थादिष्वभ्यासेन चाभ्यासस्य** ।८।३।६४।

---

टिप्प०–१ सेगित्यादि । दन्त्यश्च अच्च दन्त्याचौ तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, दन्त्या-जन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्याजन्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः । २ अभिषावयतीति ण्यन्तेऽपि षत्वं भवत्येव । शब्दशक्तिमहिम्नोपसर्गाणा-मपि प्रकृत्यर्थ एवान्वयात् । ३ उपसर्गात्सुनोतीत्यादिना विहितं षत्वं अड्व्यत्राय एवेति भ्रमनिवारणार्थमपिशब्दस्योपादानम् । ४ स्थादिष्विितीह द्वे वाक्ये । आद्यं षत्वविध्यर्थं, द्वितीयं तु नियमार्थम् ।

प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चाभ्यासस्य, न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः ॥ **सेधतेर्गतौ**[1] ।८।३।११३। गत्यर्थस्य सेधतेः सस्य षो न । गङ्गां विसेधति । एवम् ॥ **चिती संज्ञाने** ॥ **शुच शोके** । **गद व्यक्तायां वाचि** । गदति ॥ **नेर्गद**[2]**नदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च** ।८।४।१७। उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं स्यात् गदादिषु परेषु । प्रणिगदति । **कुहोश्चुः** ।७।४।६२। अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥ **अत उपधायाः** ।७।२।११६। वृद्धिः स्यात् ञिति णिति च प्रत्यये । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ॥ **णलुत्तमो वा** ।७।१।९१। णित्स्यात् । जगाद, जगद । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ॥ **अतो हलादेर्लघोः** ।७।२।७। हलादेर्लघोरतो वृद्धिर्वेडादौ सिचि परस्मैपदेषु । अगादीत् । अगदीत् । अगदिष्यत् ॥ **णद अव्यक्ते शब्दे** ॥ **णो नः** ।६।१।६५। धात्वादेर्णस्य नः । णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ॥ **उपसर्गाद**[3]**समासेऽपि णोपदेशस्य** ।८।४।१४। उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । नदति । ननाद ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि** ।६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि । नेदतुः । नेदुः ॥ **थलि च सेटि**

---

टिप्प०-१ सेधतेरिति । अयं निषेधोऽनन्तरस्येति न्यायेनादेशप्रत्यययोरित्यस्य । तेन निषेधेत्यादौ षत्वं भवत्येवेति केचित् । २ नेर्गदनद-गदादीनां चतुर्णां शपा निर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः । तेन प्रनिजागदीति प्रनिनानदीति प्रनिसातीति प्रनिजङ्घनीति इत्यादौ णत्वं न । घुशब्देन घुसंज्ञका दाधादयः षट् गृह्यन्ते । डुदाञ् प्रणिददाति । दाण् प्रणियच्छति । दो प्रणिद्यति । देङ् प्रणिदयते । धेट् प्रणिधयति । डुधाञ् प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणम् । घुप्रकृतिमाङ् इति पठित्वा भाष्यादौ तथा व्याख्यानात् । ३ समासेऽङ्गुलेः सङ्गः इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणम् । कृते तु तस्मिन् असमास एव स्यादित्यपेर्ग्रहणं कृतम् ।

।६।४।१२१। इड्वति थलि प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद। ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्। अनदीत्। अनदिष्यत्॥ श्च्युतिर् क्षरणे। (इर इत्संज्ञा वाच्या)॥ शर्पूर्वाः खयः।७।४।६१। शिष्यन्ते अभ्यासस्य। हलादिः शेषापवादः। चुश्च्योत॥ इरितो वा।३।१।५७। इरितो धातोश्च्लेरङ् वा परस्मैपदेषु। अश्च्युतत्। अश्च्योतीत्। यकाररहितोऽप्ययम्। श्चोतति। चुश्चोत। अश्चोतत्। अश्चोतीत्॥ च्युतिर् आसेचने। च्योतति॥ टुनदि समृद्धौ॥ आदिर्ञिटुडवः।१।३।५। उपदेशे धातोराद्या एते इतः स्युः॥ इदितो नुम् धातोः।७।१।५८। नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्। इदित्त्वान्नलोपो न। नन्द्यात्। अनन्दीत्। अनन्दिष्यत्। एवं कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः॥ विदि अवयवे। विन्दति। भिदीति पाठान्तरम्। भिन्दति॥ गडि वदनैकदेशे। गण्डति॥ चदि आह्लादने। चन्दति॥ त्रदि चेष्टायाम्। त्रन्दति॥ कदि क्रदि क्लदि आह्वाने रोदने च॥ क्लदि परिदेवने॥ तकि कृच्छ्रजीवने॥ युगि जुगि वुगि वर्जने। मघि मण्डने॥ शिघि आघ्राणे॥ मन्थ विलोडने। मन्थति। ममन्थ। कित्वान्नलोपः। मथ्यात्। अर्च पूजायाम्। अर्चति॥ तस्मान्नुड् द्विहलः।७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट्। आनर्च। आनर्चतुः। आनर्चुः। अर्चिता। अर्चिष्यति। अर्चतु। आर्चत्। अर्चेत्। अर्च्यात्। आर्चीत्। आर्चिष्यत्। एवं अर्द गतौ याचने च। अति अदि बन्धने॥ वन षण संभक्तौ। वनति। ववान॥ न शसददवादिगुणानाम्।६।४।१२६। शसेर्ददेर्वकारादीनां

---

टिप्प०-१ अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तेन शरो न शेषः, किंतु खयामेव। इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति। द्वितीयस्यैकाचः संबन्धि रेफस्यैव नन्द्रा इति निषेधादिति बोध्यम्। २ इदित इति कर्मधारयेण धातोर्विशेषणम्। तेन इदन्तस्य धातोर्नुम्विधानाच्चक्षिङादौ न दोषः। ३ न शसदद—शसु हिंसायां दन्त्यान्तः। सूत्रेऽवयवावयविभावः षष्ठ्यर्थः। तथा च शसददवादीनां योऽकार इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वाद्भेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य, तन्निर्वाहार्थं व्याचष्टे-गुणशब्देन भावितस्येति। भावितत्वं च साक्षात्परम्परासाधारणम्।

गुणशब्देन भावितो योऽत् तस्य च एत्वाभ्यासलोपौ न। ववनतुः। ववनुः। सनति। ससान। सेनतुः। सेनुः॥ **ये विभाषा** ।६।४।४३। जनसनखनामात्वं वा यादौ क्ङिति। सायात्, सन्यात्॥ **वज व्रज गतौ**। व्रजति। वव्राज। व्रजिता। व्रजिष्यति। व्रजतु। अव्रजत्। व्रजेत्। व्रज्यात्॥ **वदव्रजहलन्तस्याचः** ।७।२।३। एषामचो वृद्धिः परस्मैपदे सिचि। अव्राजीत्। अव्रजिष्यत्॥ **कटे वर्षावरणयोः**। कटति। चकाट। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्॥ **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** ।७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि। अकटीत्। अकटिष्यत्॥ **गुपू रक्षणे**॥ **गुपूधूपविच्छिपणिपनिभ्य आयः** ।३।१।२८। स्वार्थे॥ **सनाद्यन्ता धातवः** ।३।१।३२। सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः।

सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विब् णिज्यङौ तथा।
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥ १॥

सनाद्यन्ता धातव इत्यस्यानन्तरं भूवादय इत्येव सूत्रयितुं युक्तम्। धातुत्वाल्लडादयः गोपायति॥ **आयादय आर्धधातुके वा** ।३।१।३१। आर्धधातुकविवक्षायामाययेङ्णिङो वा स्युः। (कास्यनेकाच आम्वक्तव्यो लिटि)। कास आम्विधानान्मस्य नेत्वम्॥ **अतो लोपः** ।६।४।४८। आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके॥ **आमः** ।२।४।८१। आमः परस्य लुक्॥ **कृञ्चानुप्रयुज्यते लिटि** ।३।१।४०। आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते तेषां

---

टिप्प०-१ तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। हलोऽच इत्युक्ते त्वजन्ताङ्गस्य हलः स्थाने वृद्धिरिति कदाचिदाशङ्क्येत। अच इति तु इक्परिभाषया अनुपस्थानार्थम्। अन्यथा अभैत्सीदित्यत्र स्यान्न त्वपाक्षीदित्यादौ। २ प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः। ३ एतदुत्तरं सिद्धान्तकौमुद्यां आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते। तेन कृभ्वस्तियोग इत्यतः कृञो द्वितीयेति ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः। तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः। संपदित्व प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते।

द्वित्वादि ॥ **उरत् ।७।४।६६।** अभ्यासस्य ऋतोऽत्स्यात्प्रत्यये । वृद्धिः । गोपायांचकार । द्वित्वात्परत्वाद्यणि प्राप्ते ॥ **द्विर्वचनेऽचि ।१।१।५९।** द्वित्वनिमित्तेऽचि परे अच आदेशो न द्वित्वे कर्तव्ये । गोपायांचक्रतुः । गोपायांचक्रुः ॥ **एकाच उपदेशेऽनुदात्तात् ।७।२।१०।** उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्यार्धधातुकस्येट् न ।

ऊदॄदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥

**कान्तेषु** । शक्ल् एकः ॥ **चान्तेषु** । पच् । मुच् । रिच् । वच् । विच् । सिच्- एते षट् ॥ **छान्तेषु** । प्रच्छ्येकः ॥ **जान्तेषु** । त्यज् । निजिर् । भज् । भञ्ज् । भुज् । भ्रस्ज् । मस्ज् । यज् । युज् । रुज् । रञ्ज् । विजिर् । स्वञ्ज् । सञ्ज् । सृजः । पञ्चदश ॥ **दान्तेषु** । अद् । क्षुद् । खिद् । छिद् । तुद् । नुद् । पद्य । भिद् । विद्य । विनद् । शद् । सद् । स्विद्य । स्कन्द । हद् । षोडश ॥ **धान्तेषु** । क्रुध् । क्षुध् । बुध्य । बन्ध् । युध् । रुध् । राध् । व्यध् । शुध् । साध् । सिध्य । एकादश ॥ **नान्तेषु** । मन्यहनौ द्वौ ॥ **पान्तेषु** । आप् । क्षिप् । छुप् । तप् । तिप् । तृप्य । दृप्य । लिप् । लुप् । वप् । शप् । स्वप् । सृप् । त्रयोदश ॥ **भान्तेषु** । यभ् । रभ् । लभ् । त्रयः ॥ **मान्तेषु** । गम् । नम् । रम् । यम् । चत्वारः ॥ **शान्तेषु** । क्रुश् । दंश् । दिश् । दृश् । मृश् । रिश् । रुश् । लिश् । विश् । स्पृश् । दश ॥ **षान्तेषु** । कृष् । त्विष् । तुष् । द्विष् । दुष् । पुष्य । पिष् । विष् । शिष् । शुष् । श्लिष्य । एकादश ॥ **सान्तेषु** । घसॢवसती द्वौ ॥ **हान्तेषु** । दह् । दिह् । दुह् । नह् । मिह् । रुह् । लिह् । वह् । अष्टौ ॥ अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ गोपायांचकृम । गोपायांचकथुः । गोपायांचक्र । गोपायांचकार । गोपायांचकृव । गोपायांचकृम । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥ **स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।** स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा । जुगोपिथ,

टिप्प०–१ अनेन जागृदीधीत्यादीनां व्यावृत्तिः । २ अत्र गुणाभावश्छान्दसः।

जुगोप्थ । गोपायिता । गोपिता । गोप्ता । गोपायिष्यति । गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात् । गुप्यात् । अगोपायीत् ॥ **नेटि** ।७।२।४। इडादौ सिचि [1]हलन्तलक्षणा वृद्धिर्न । अगोपीत् । अगौप्सीत् ॥ **झलो झलि** ।८।२।२६। झलः परस्य सस्य लोपः स्याज्झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् ॥ **क्षि क्षये** । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते ॥ **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि**[2] ।७।२।१३। क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥ [3]**अचस्तास्वत्थल्यनिटो नित्यम्** ।७।२।६१। उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न । **उपदेशेऽत्वतः** ।७।२।६२। उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न ॥ **ऋतो भारद्वाजस्य** ।७।२।६३। तासौ नित्यानिट ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य तु स्यादेव अयमत्र संग्रहः ।

अजन्तोऽ[4]कारवान्वा [5]यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥ १ ॥

चिक्षयिथ । चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय । चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् ॥ **अकृत्सार्वधातुकयोर्दीर्घः** ।७।४।२५। अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु** ।७।२।१। इगन्ताङ्गस्य वृद्धिः परस्मैपदपरे सिचि ।

---

टिप्प०–१ अयं हलन्तलक्षणाया एव वृद्धेर्निषेधः । वदव्रजोस्तु विशिष्यविधानान्न निषेधः । २ क्रादीनां चतुर्णां ग्रहणं नियमार्थम् । प्रकृत्याश्रयः प्रत्ययाश्रयो यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् । कृसृभृ एषामनुदात्तत्वात् 'एकाच उपदेशे' इति प्रकृत्याश्रये निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् 'श्र्युकः किति' इति प्रत्ययाश्रये च निषेधे प्राप्ते नियमार्थमिदम् । ३ तासाविव तास्वदिति सप्तम्यन्ताद्वतिः यथा तासौ न भवति तथा थल्यपीत्यर्थः । ४ ह्रस्वाकारवानित्यर्थः । ५ यस्तास्यनिट् स ऋदन्तः थलि नित्यानिट् भवतीत्यर्थः ।

अक्षैषीत् । अक्षेष्यत् ॥ तप सन्तापे । तपति । तताप । तेपतुः । तेपुः । तेपिथ । ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥ **निसस्तपतावनासेवने** ।८।३।१०२। षः स्यात् । आसेवनं पौनःपुन्यं, ततोऽन्यस्मिन्विषये । निष्टपति ॥ क्रमु पादविक्षेपे ॥ **वा**[1] **भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** ।३।१।७०। एभ्यः श्यन्वा कर्तरि सार्वधातुके । पक्षे शप् ॥ **क्रमः परस्मैपदेषु** ।७।३।७६। क्रमेर्दीर्घः परस्मैपदे शिति । क्राम्यति, क्रामति । चक्राम ॥ **स्नुक्रमोरनात्मनेपदनिमित्ते** ।७।२।३६। अत्रैवेट्[2] । क्रमिता । क्रमिष्यति । क्राम्यतु । क्रामतु । अक्राम्यत् । अक्रामत् । क्राम्येत् । क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् ॥ चमु छमु जमु झमु अदने ॥ **ष्ठिवुक्लमुचमां शिति** ।७।३।७५। अचो दीर्घः । ( आङि[3] चम इति वक्तव्यम् ) आचामति । आङि किम्? चमति, विचमति । अचमीत् ॥ स्खल संचलने । स्खलति । चस्खाल ॥ **अतो ल्रान्तस्य**[4] ।७।२।२। अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः परस्मैपदे सिचि । अस्खालीत् । अस्खलिष्यत् ॥ त्सर छद्मगतौ । अत्सारीत् ॥ पा पाने ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** । ७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥ **आत औ णलः** ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः । पपौ ॥ **आतो लोप इटि च** ।६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः । पपतुः । पपुः । पपिथ । पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥ **एर्लिङि** ।६।४।६७। घुसंज्ञानां मास्थागैपिबतिजहातिस्यतीनां चात एत्वमार्धधातुके किति लिङि ।

टिप्प०-१ उभयत्र विभाषेयम् । अनवस्थानार्थो भ्रमिः । क्लमित्रसी च दिवादी । तेभ्यो नित्यं प्राप्ते इतरेषामप्राप्ते चारम्भात् । २ स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयमित्याह–अत्रैवेडिति । ३ ष्ठिवुक्लमुआचमामिति वृत्तिकारोक्तपाठोऽयुक्त इति भावः । ४ ल्रान्तस्येत्यागन्तुकेनाकारेण निर्देशः । क्वचिद्भाष्ये लन्तस्येत्यपि पाठः ।

पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् ॥ **आतः** ।३।४।११०। सिज् लुकि आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात्** ।६।१।९६। अपदान्तादवर्णा-दुसि पररूपमेकादेशः । अपुः । अपास्यत् ॥ ग्लै म्लै हर्षक्षये । ग्लायति ॥ **आदेच उपदेशेऽशिति** ।६।१।४५। उपदेशे एजन्तस्य धातोरात्वं न तु शिति जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ॥ **वाऽन्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा आर्ध-धातुके किति लिङि । ग्लेयात् । ग्लायात् ॥ **यमरमनमातां सक् च** ।७।२।७३। एषां सक् स्यादेभ्यः सिच इट् परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । एवं म्ला-यति ॥ धेट् पाने । धयति । दधौ ॥ **दाधा घ्वदाप्** ।१।१।२०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । धेयात् ॥ **विभाषा धेट्श्व्योः** ।३।१।४९। आभ्यां च्लेश्चङ् वा ॥ **चङि** ।६।१।११। अनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्य । अदधत् । अदधताम् ॥ **विभाषा घ्राधेट्शाच्छासः** ।२।४।७८। एभ्यः सिचो लुग्वा परस्मैपदेषु । अधात् । अधाताम् । अधुः । पक्षे इट्सकौ । अधासीत् । अधासिष्टाम् । अधासिषुः ॥ ध्यै न्यक्करणे । ध्यायति ॥ द्रै स्वप्ने । द्रायति ॥ ध्रै तृप्तौ । ध्रायति ॥ ध्यै चिन्तायाम् । ध्यायति ॥ रै शब्दे । रायति ॥ **स्त्यै ष्ट्यै** शब्दसङ्घातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासतीत्यादौ भविष्यति ॥ खै खदने । खायति ॥ क्षै जै षै क्षये । क्षायति । जायति । सायति । घुमास्थेत्यत्र 'विभाषा-घ्राधेट्' इत्यत्र च सतेरेव ग्रहणं न त्वस्य । तेन एत्वसिज्लुकौ न । सायात् । असासीत् ॥ कै गै शब्दे ॥ शै श्रै पाके ॥ पै ओवै शोषणे । पायात् । अपासीत् । घुमास्थेतीत्वं, तदपवाद एर्लिङीत्येत्वं गातिस्थेति सिज्लुकौ च न । (लक्षणप्रति-पदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्) इति पारूपस्य लाक्षणिकत्वात् ॥ ष्टै वेष्टने ।

---

टिप्प०-१ अनुबन्धानामनेकान्तत्वादादेच उपदेश इत्यात्वे दोदेङ्धेटामनुकरणे दाधारूप-त्वमस्ति । एवं च दाश्च दाश्च दाः, धाश्च धौ च दाश्च धौ च दाधाः इति विग्रहः । २ अधुरिति । आतः इति झेर्जुस् । ३ न्यक्करणं तिरस्करणम् ।

स्नायति ॥ ष्णै वेष्टने । शोभायां चेत्येके । स्नायति ॥ दैप् शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् ॥ घ्रा गन्धोपादाने । जिघ्रति । घ्रायात्, घ्रेयात् । अघ्रात् । अघ्रासीत् । अघ्रासत् ॥ ध्मा शब्दाग्निसंयोगयोः । धमति ॥ ष्ठा गतिनिवृत्तौ । तिष्ठति । स्थादिष्वित्ति षत्वम् । अधितष्ठौ । उपसर्गादिति षत्वम् । अधिष्ठाता स्थेयात् । सत्वे कृते प्रकृतिस्तवर्गः स्यात् ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥

गातिस्थेति सिचो लुक् । अस्थात् ॥ म्ना अभ्यासे । मनति ॥ दाण् दाने । प्रणियच्छति ॥ ह्वृ कौटिल्ये । ह्वरति ॥ ऋतश्च संयोगादेर्गुणः ।७।४।१०। ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार । जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥ ऋद्धनोः स्ये ।७।२।७०। ऋतो हन्तेश्च स्यस्य इट् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥ गुणोर्तिसंयोगाद्योः[2] ।७।४।२९। अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥ स्वृ शब्दोपतापयोः । स्वरति । स्वरतीति वेट् । सस्वरिथ । सस्वर्थ । वमयोस्तु स्वरत्यादिविकल्पं बाधित्वा पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्याच्छ्रयुकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वादृद्धनोरिति नित्यमिट् । स्वरिष्यति ॥ स्मृ चिन्तायाम् । स्मरति । ह्वृ संवरणे । ह्वरति ॥ सृ गतौ । क्रादित्वान्नेट् । ससर्थ । ससृव । ससृम ॥ रिङ्शयग्लिङ्क्षु ।७।४।२८। शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् । रीङि प्रकृते रिङ्विधिसामर्थ्यान्न दीर्घः । स्रियात् । असार्षीत् । शीघ्रगतौ तु पाघ्रेति शिति धौरादेशः । धावति ॥ घृ घृ सेचने ॥ ध्वृ हूर्च्छने । ध्वरति ॥ दृशिर् प्रेक्षणे । प-

---

टिप्प०-१ अत्र तपरकरणं स्पष्टार्थम् । स्तृञ् इत्यादेर्लिटि तस्तरतुरित्यादौ ऋच्छत्यृतामिति गुणस्य जायमानत्वात् । २ अर्तीति भ्वादिस्वाद्योर्ग्रहणम् । लुका निर्देशस्तु सौत्र-ऋग्रहणे कर्तव्ये यङ्लुङ्निवृत्त्यर्थः ।

श्यति ॥ **विभाषा सृजिदृशोः** ।७।२।६५। आभ्यां थल इड् वा ॥ **सृजिदृशोर्झल्यमकिति** ।६।१।५८। अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ, ददर्शिथ ॥ **षढोः कः सि** ।८।२।४१। द्रक्ष्यति । दृश्यात् । इरित्त्वादङ् वा ॥ **ऋदृशोऽङि गुणः** ।७।४।१६। अदर्शत् ॥ **न दृशः** ।३।१।४७ च्लेर्वक्ष्यमाणः क्सो न । अद्राक्षीत् । अद्रक्ष्यत् ॥ श्रु श्रवणे ॥ **श्रुवः शृ च**[2] ।३।१।७४। श्रुवः शृ आदेशः श्नुप्रत्ययश्च कर्तरि सार्वधातुके शृणोति ॥ **सार्वधातुकमपित्** ।१।२।४। अपित्सार्वधातुकं ङिद्वत्स्यात् । शृणुतः ॥ **हुश्नुवोः सार्वधातुके** ।६।४।८७। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यासंयोगपूर्वस्योवर्णस्य यण्स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि ॥ **लोपश्चास्यान्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । शृण्वः, शृणुवः । शृण्मः, शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रविथ । शुश्रुवथुः । शुश्रुव । शुश्राव, शुश्रव । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु । शृणुतात्, शृणुताम् । शृण्वन्तु ॥ **उतश्च प्रत्ययादसंयोगपूर्वात्** ।६।४।१०६। असंयोगपूर्वात्प्रत्ययोतो हेर्लुक् । शृणु । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृण्व, अशृणुव । अशृण्म, अशृणुम । शृणुयात् । शृणुयाताम् ॥ **उस्यपदान्तात्** ।६।१।९६। अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात् । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् । गम्लृ सृप्लृ गतौ । **इषुगमियमां छः** ।७।३।७७। शिति । गच्छति । जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि** ।६।४।९८। एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता ॥ **गमेरिट् परस्मैपदेषु** ।७।२।५८। गमेः

---

टिप्प०–१ क्रादिनियमान्नित्ये प्राप्ते विभाषेयम् । २ यद्ययं धातुः स्वादौ पठ्येत तर्हि चकारो न कर्तव्य इति लाघवमाहुः ।

सादेरार्धधातुकस्येट् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गम्यात् ॥ **पुषादिद्युताद्य्लृदितः परस्मैपदेषु** ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् । सर्पति ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ।६।१।५९। उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा झलादावकिति । स्रप्ता, सर्प्ता । असृपत् ॥ **ञिक्ष्विदा अव्यक्ते शब्दे** । क्ष्वेदति ॥ **यभ मैथुने** । यभति । वेट् येभिथ ॥ **झषस्तथोर्धोऽधः** ।८।२।४०। झषः परयोस्तथयोर्धः स्यात्, न तु दधातेः । ययब्ध । यब्धा । **णम प्रह्वत्वे शब्दे च** । नेमिथ, ननन्थ । नन्ता । नंस्यति । अनंसीत् । अनंसिष्टाम् ॥ **त्यज हानौ** । त्यजति । तत्याज । तत्यजिथ, तत्यक्थ । त्यक्ता । अत्याक्षीत् । अत्याक्ताम् । अत्यक्ष्यत् । **अक्षू व्याप्तौ** ॥ **अक्षोऽन्यतरस्याम्** ।३।१।७५। श्नुर्वा स्यात्कर्तरि सार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्षति । आनक्ष । आनक्षिथ, आनष्ठ । अक्षिता, अष्टा । अक्षिष्यति । स्कोरिति कलोपः ॥ **षढोः कः सि** ।८।२।४१। अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयाताम् । अक्ष्णुयुः । अक्ष्यात् । अक्षीत् । अक्षिष्टाम् ॥ **तक्षू त्वक्षू तनूकरणे** ॥ **तनूकरणे तक्षः** ।३।१।७६। श्नुर्वा शब्विषये । तक्ष्णोति–तक्षति वा काष्ठम् । ततक्ष । ततक्षिथ, ततष्ठ । अतक्षीत् । अतक्षिष्टाम्[3] । अताक्षीत् । अताष्टाम् । तनूकरणे किम् ? वाग्भिः संतक्षति–भर्त्सयतीत्यर्थः ॥ **रक्ष पालने** । रक्षति ॥ **णिक्ष चुम्बने** । प्रणिक्षति ॥ **वक्ष रोषे** । संघात इत्येके । वक्षति । **मृक्ष संघाते** । म्रक्ष इत्येके ॥ **तक्ष त्वचने** । त्वचनं संवरणं त्वचो ग्रहणं च ॥ **पक्ष परिग्रह इत्येके** ॥ **सूर्क्ष आदरे** । सुसूर्क्ष ॥ **काक्षि वाक्षि माक्षि काङ्क्षायाम्** ॥ **द्राक्षि ध्राक्षि ध्वाक्षि घोरवासिते च** ॥ **चूष पाने** ॥ **तूष तुष्टौ** । **पूष वृद्धौ** ॥ **मूष स्तेये** ॥ **लूष रूष भूषायाम्** ॥ **शूष प्रसवे** ।

---

टिप्प०–१ पुषधातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ्यते । यदि तु पुष पुष्टाविति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं भवेत् । अतो दिवादीनामेव ग्रहणम् । २ ऌदित्वादङ् । स्पृशमृशेति सिज्विकल्पवार्तिके सृपं प्रक्षिप्य अस्राक्षीदिति केचिदुदाहरन्ति तत्प्रामादिकम् । ३ नेटीति वृद्धिनिषेधः । इडभावे तु अताक्षीत् ।

**यूष** हिंसायाम् ॥ **जूष** च ॥ **भूष** अलंकारे ॥ **जि** जये । जयति ॥ **सन्लिटोर्जेः** ।७।३।५७। सन्लिण्निमित्तादभ्यासात्परस्य जेः कुत्वम् । जिगाय । जिग्यतुः । जिगयिथ ॥ **जीव** प्राणधारणे । जीवति ॥ **पीव मीव तीव णीव** स्थौल्ये । पीवति । पिपीव ॥ **मुर्वी** बन्धने ॥ **उपधायां च** ।८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः-परत इको दीर्घः स्यात् । मूर्वति ॥ **पुर्व पर्व मर्व** पूरणे । पूर्वति । पर्वति । मर्वति ॥ **चर्व** अदने । चर्वति ॥ **कष खष शिष जष झष शष वष मष रुष रिष** हिंसार्थाः । शेषति । शिशेष । शेष्टा ॥ **शल[1] इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः । अशिक्षत् ॥ **तीषसहलुभरुषरिषः** ।७।२।४८। इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा । रोषिता । रोष्टा ॥ **भष** भर्त्सने । इह भर्त्सनं श्वरवः ॥ **पुष** पुष्टौ । पोषिता । अनुदात्तेषु पुष्येति श्यना निर्देशादयमुदात्तः । अङ्विधौ दैवादिकस्य ग्रहणात् नाङ् । अपोषीत् ॥ **श्रिषु श्लिषु प्रुषु प्लुषु** दाहे । श्रेषति । श्लेषति । प्रोषति । प्लोषति ॥

॥ **इति परस्मैपदिनः** ॥

**एध** वृद्धौ ॥ **टित आत्मनेपदानां टेरे** ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥ **आतो ङितः** ।७।२।८१। अतः परस्य ङितामात इय् स्यात् । एधेते । एधन्ते ॥ **थासः से** ।३।४।८०। टितो लस्य । एधसे । एधेथे । एधध्वे । एधे । एधावहे । एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः** ।३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् लिटि ॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य** ।१।३।६३। आम् प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् ॥ **लिटस्तझयोरेशिरेच्[2][3]** ।३।४।८१। एकारोच्चारणं ज्ञापकम्—तङादेशानां टेरेत्वं नेति । तेन

---

टिप्प०—१ शल इति धातोर्विशेषणादन्तलाभः । २ एकारोच्चारणं ज्ञापनार्थमिति लिटस्तझयोरित्यत्र स्फुटीभविष्यति । ३ एशिति शकारकरणमकारविशिष्टतकारस्यादेशत्वाय । ४ नच लिटस्तझयोरेशिरेजित्येवमेव मात्रालाघवेन पठितव्यं, पश्चाच्च टित आत्मनेपदानां टेरे इत्यनेनैत्वं भविष्यत्येवेत्यत उक्तं एकारोच्चारणं ज्ञापकमिति । तथा चैकारोच्चारणं व्यर्थं सज्ज्ञापयति तङादेशानां टेरेत्वं । नेति अत एव डारौरसां नैत्वम् ॥

डारौरसां न। एधांचक्रे। एधांचक्राते। एधांचक्रिरे। एधांचकृषे। एधांचक्राथे॥ इणः षीध्वंलुङ्लिटां धोऽङ्गात् ।८।३।७८। इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः। एधांचकृढ्वे। एधाचक्रे। एधांचकृवहे। एधांचकृमहे। एधांबभूव। एधामास। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न। अन्यथा हि कृञ्चानुप्रयुज्यत इति कृभ्वित्ति वा ब्रूयात्। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे॥ धि च ।८।२।२५। धादौ प्रत्यये सलोपः। एधिताध्वे॥ ह एति ।७।४।५२। तासस्त्योः सस्य हः स्यात्। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे॥ आमेतः ।३।४।९०। लोट एत आम्। एधताम्। एधेताम्। एधन्ताम्॥ सवाभ्यां वामौ ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्वामौ स्तः। एधस्व। एधेथाम्। एधध्वम्। एत ऐ ।३।४।९३। लोडुत्तमस्य। एधै। एधावहै। एधामहै। 'आटश्च'। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि॥ लिङः सीयुट् ।३।४।१०२। लिङः सलोपोऽनन्त्यस्येति सलोपः। लोपो व्योर्वलि ।६।१।६६। एधेत। एधेयाताम्॥ झस्य रन् ।३।४।१०५। लिङः। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्॥ इटोऽत् ।३।४।१०६। लिङादेशस्य। एधेय। एधेवहि। एधेमहि॥ सुट् तिथोः ।३।४।१०७। लिङस्तथोः सुट्। यलोपः। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्॥ आत्मनेपदेष्वनतः ।७।१।५। अनकारात्परस्यात्मनेपदेषु झस्यात् स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये।

टिप्प०-१ षीध्वमिति षकारोच्चारणं तु सुन्नीध्वमित्यत्रैकदेशविकृतन्यायेन सीध्वमः सत्त्वादतिव्याप्तिवारणार्थम्। २ प्रत्यय इति। तेन पयो धावतीत्यादौ न सलोपः। ३ इणः परत्वेऽपि इणन्तादङ्गात्परत्वाभावात् इणः षीध्वमिति ढत्वं न भवति।

ऐधिष्यावहि । ऐधिष्यामहि ॥ **कमु** कान्तौ ॥ **कमेर्णिङ्** ।३।१।३०। स्वार्थे । कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु** ।६।४।५५। एषु[1] णेरय् । कामयांचक्रे । आयादय इति वा णिङ् । चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कमिता । कामयिष्यते । कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट । कमिषीष्ट ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** ।३।१।४८। ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि । अकाम्-इ-अत इति स्थिते ॥ **णेरनिटि**[2] ।६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः ॥ **णौ चङ्युपधाया ह्रस्वः** ।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे** ।७।४।९३। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्यात् णावग्लोपेऽसति ॥ **सन्यतः** ।७।४।७९। अभ्यासस्यात इत् सनि ॥ **दीर्घो लघोः** ।७।४।९४। लघोरभ्यासस्य दीर्घः सन्वद्भावविषये । अचीकमत । णिङभावपक्षे–(कमेश्च्लेश्चङ् वाच्यः) । अचकमत । अकामयिष्यत । अकमिष्यत ॥ **भाम** क्रोधे । भामते । बभामे ॥ **क्षमूष्** सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । चक्षमिवहे । चक्षमिमहे ॥ **म्वोश्च** ।८।२।६५। मान्तस्य धातोर्मस्य नः स्यान्म्वोः परयोः । चक्षण्वहे । चक्षण्महे ॥ **गाधृ** प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते । जगाधे ॥ **बाधृ** लोडने । लोडनं प्रतिघातः । बाधते ॥ **नाथृ नाधृ** याच्ञोपतापैश्वर्याशीःषु । (आशिषि नाथ इति वाच्यम्) अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । नाधते ॥ **दध** धारणे । दधते ॥ **स्कुदि** आप्रवणे । आप्रवणम् उत्प्लवनमुद्धरणं च । स्कुन्दते । चुस्कुन्दे ॥ **श्विदि** श्वैत्ये । श्विन्दते । शिश्विन्दे ॥ **वदि** अभिवादनस्तुत्योः । वन्दते । ववन्दे ॥ **भदि** कल्याणे सुखे च । भन्दते । बभन्दे ॥ **मदि** स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते ॥ **स्पदि** किंचिच्चलने । स्पन्दते । पस्पन्दे ॥ **मुद** हर्षे । मोदते । मुमुदे ॥ **उर्द** माने क्रीडायां च । ऊर्दते । ऊर्दांचक्रे ॥ **कुर्द खुर्द गुर्द गुद**

---

टिप्प०–१ आम् अन्त आलु आय्य इलु इष्णु एषु णेरयादेशः स्यात् । २ णेरिति णिङ्णिचोर्ग्रहणम् । एवमन्यत्रापि बोध्यम् ।

क्रीडायामेव । कूर्दते । खूर्दते । गूर्दते । गोदते । जुगुदे ॥ **षूद** क्षरणे । सूदते । सुषूदे ॥ **ह्राद** अव्यक्ते शब्दे । ह्रादते । जह्रादे ॥ **ह्लादी** सुखे च । चादव्यक्ते शब्दे । ह्लादते ॥ **स्वाद** आस्वादने । स्वादते । **पर्द** कुत्सिते शब्दे । गुदरव इत्यर्थः । पर्दते । पपर्दे ॥ **यती** प्रयत्ने । यतते । येते ॥ **श्रथि** शैथिल्ये । श्रन्थते ॥ **ग्रथि** कौटिल्ये । ग्रन्थते ॥ **कत्थ** श्लाघायाम् । कत्थते । चकत्थे ॥ **श्लोकृ** संघाते । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । शुश्लोके ॥ **शकि** शङ्कायां । शङ्कते । शशङ्के ॥ **अकि** लक्षणे । अङ्कते । आनङ्के ॥ **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वष्क मष्क टिकृ टीकृ तिकृ तीकृ रघि लघि** गत्यर्थाः । कङ्कते । वङ्कते । श्वङ्कते । त्रङ्कते । ढौकते । डुढौके । त्रौकते । तुत्रौके । (सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः) । ष्वष्कते । षष्वष्के । वस्कते । ववस्के । मस्कते । ममस्के । टेकते । टीकते । तेकते । तीकते । रङ्घते । लङ्घते ॥ **श्लाघृ** कत्थने । श्लाघते ॥ **पचि** व्यक्तीकरणे । पञ्चते । पपञ्चे । । **ऋज** गतिस्थानार्जनोपार्जनेषु । अर्जते । (नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते) । आनृजे । **ऋजिभृजी** भर्जने । ऋञ्जते । ऋञ्जांचक्रे । भर्जते ॥ **एजृ भ्रेजृ भ्राजृ** दीप्तौ । एजते । एजांचक्रे । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे ॥ **वेष्ट** वेष्टने । वेष्टते । विवेष्टे ॥ **चेष्ट** चेष्टायाम् । चेष्टते । चिचेष्टे ॥ **स्फुट** विकसने । स्फोटते । पुस्फुटे ॥ **टुवेपृ** कम्पने । वेपते ॥ **कपि** चलने । कम्पते । चकम्पे ॥ **भिक्ष** भिक्षायामलाभे लाभे च । भिक्षते । बिभिक्षे ॥ **दीक्ष** मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे ॥ **भाष** व्यक्तायां वाचि । भाषते । बभाषे ॥ **वर्ष** स्नेहने । वर्षते । ववर्षे ॥ **ईह** चेष्टायाम् । ईहते । ईहांचक्रे ॥ **गर्ह गल्ह** कुत्सायाम् । गर्हते । गल्हते ॥ **काशृ** दीप्तौ । काशते । चकाशे ॥ **ऊह** वितर्के । ऊहते । ऊहांचक्रे । कथम् 'अनुक्तमप्यूहति[1] पण्डितो जनः' इति । (अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्) । अनुदात्तेतश्चक्षिङो ङित्करणाज्ज्ञापकात्[2] । तेन 'उदयति[3] यदि भानुः' 'स्फायन्निर्मोकसंधिः'[4] इत्या-

---

टिप्प०–१ ऊहति वितर्कयति । २ अनुदात्तेत्त्वेनैव तङि सिद्धे ङित्करणं व्यर्थमिति भावः । ३ उदयतीति उत्पूर्वस्यायधातो रूपम् । ४ स्फायन्निति । 'स्फायी वृद्धौ' इत्यनुदात्तेतो लटः शत्रादेशः ।

दिसिद्धमित्याहुः ॥ **अय गतौ** । अयते ॥ **उपसर्गस्यायतौ** ।८।२।१९। अयतावुपसर्गरेफस्य लत्वम् । प्लायते । पलायते ॥ **दयायासश्च** ।३।१।३७। एभ्य आम्लिटि । अयांचक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट ॥ **विभाषेटः** ।८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् । आयिष्यत ॥ **द्युत दीप्तौ** । द्योतते ॥ **द्युतिस्वाप्योः संप्रसारणम्** ।७।४।६७। अभ्यासस्य । दिद्युते । द्योतिता । द्योतिष्यते । द्योतताम् । अद्योतत । द्योतेत । द्योतिषीष्ट ॥ **द्युद्भ्यो लुङि** ।१।३।९१। द्युतादिभ्यः परस्मैपदं वा लुङि । पुषादीत्यङ् । अद्युतत् । अद्योतिष्ट । अद्योतिष्यत ॥ एवं **श्विता वर्णे** ॥ **ञिमिदा स्नेहने** । मेदते ॥ **ञिष्विदा स्नेहनमोचनयोः** । मोहनयोरित्येके ॥ **रुच दीप्तावभिप्रीतौ च** ॥ **घुट परिवर्तने** ॥ **शुभ दीप्तौ** ॥ **क्षुभ संचलने** ॥ **णभ तुभ हिंसायाम्** ॥ **स्रंसु ध्वंसु भ्रंसु** अवस्रंसने ॥ **ध्वंसु गतौ च** ॥ **स्रम्भु विश्वासे** । अस्रभत् ॥ **वृतु वर्तने**। वर्तते । (ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन) । ववृते । वर्तिता ॥ **वृद्भ्यः स्यसनोः** ।१।३।९२। वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्ये सनि च ॥ **न वृद्भ्यश्चतुर्भ्यः**[2] ।७।२।५९। वृत् वृध् शृध् स्यन्दूभ्यः सादेरार्धधातुकस्येण्न तङानयोरभावे । वर्त्स्यति । वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत । ॥ एवं **वृधु वृद्धौ** ॥ **शृधु** शब्दकुत्सायाम् ॥ **स्यन्दू प्रस्रवणे** । स्यन्दते । सस्यन्दे । सस्यन्दिषे । सस्यन्त्से । सस्यन्दिध्वे, सस्यन्ध्वे । स्यन्दिता, स्यन्ता । वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते, स्यन्त्स्यते । स्यन्देत । स्यन्दिषीष्ट, स्यन्त्सीष्ट । द्युद्भ्यो लुङीति । परस्मैपदपक्षेऽङ् । नलोपः, अस्यदत्, अस्यन्दिष्ट, अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत् । अस्य-

---

टिप्प०–१ यद्यपीटः षीध्वमवयवत्वात्तस्य ततः परत्वं दुरुपपादं तथापि श्रुतिकृतानन्तर्यमात्रेण शास्त्रस्य प्रवृत्तिसामर्थ्याद्बोध्या । २ गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः ।

न्दिष्यत । असन्त्स्यत ॥ **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु** ।८।३।७२। एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा । अनुष्यन्दते, अनुस्यन्दते वा जलम् । [1]अप्राणिषु किम्? अनुस्यन्दते हस्ती ॥ **कृपू** सामर्थ्ये ॥ **कृपो रो लः** ।८।२।१८। कृप उः इति छेदः । कृपे रेफस्य लः । कृपेर्ऋकारस्यावयवो यो रेफ[2]सदृशस्तस्य च लकारसदृशः स्यात् । कल्पते । चक्लृपे । चक्लृपिषे, चक्लृप्से । इत्यादि स्यन्दिवत् ॥ **लुटि च क्लृपः** ।१।३।९३। लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा ॥ **तासि च[3] क्लृपः** ।७।२।६०। क्लृपेः परस्य तासेः सादेरार्धधातुकस्येण्न तङानयोरभावे । कल्प्तासि । कल्पितासे, कल्प्तासे । कल्प्स्यति । कल्पिष्यते, कल्प्स्यते । कल्पिषीष्ट ॥ **लिङ्सिचावात्मनेपदेषु** ।१।२।११। इक्समीपाद्धलः परौ झलादी लिङात्मनेपदपरः सिचेत्येतौ कितौ स्तः । क्लृप्सीष्ट । अक्लृपत् । अकल्पिष्ट । अक्लृप्त । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत । इति द्युतादयः ॥ **दद** दाने । ददते । ददे । ददाते । ददिरे । ददिता । ददिष्यते । ददताम् ॥ अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ **त्रपूष्** लज्जायाम् । त्रपते ॥ **तॄ[4]फलभजत्रपश्च** ।६।४।१२२। एषामत एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ॥ **घट** चेष्टायाम् । घटते । जघटे ॥ **व्यथ** भयसंचलनयोः ॥ **व्यथो लिटि** ।७।४।६८। व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । हलादिः शेषा[5]पवादः । विव्यथे ॥ **प्रथ** प्रख्याने । प्रथते । पप्रथे ॥

---

टिप्प०-१ अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव, प्राणिषु नेत्युक्तौ तु न स्यात् । २ एवं चात्र कृपेर्लत्वस्यावृत्तिरवश्यं कर्तव्या । तथा च लुटि च क्लृप इत्यादि सौत्रनिर्देशोऽप्युपपद्यत इति भावः ३ चकारात्स्याद्यार्धधातुकं गृह्यते । ४ तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात्त्रपतेस्त्वेकहल्मध्यस्थत्वाभावादप्राप्ते विधिरयम् । ५ हलादिःशेषप्रक्रमणादिति भावः । एवं च उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारणं भवति न पूर्वस्येति कैयटाद्युक्तो न संप्रसारण इति निषेधोऽत्र नापेक्षितः ।

**प्रस** विस्तारे। प्रसते॥ **म्रद** मर्दने। म्रदते॥ **स्खद** स्खदने। स्खदनं विद्रावणम्। स्खदते॥ **क्रप** कृपायां गतौ च क्रपते॥ **ञित्वरा** संभ्रमे। त्वरते॥ **टुभ्राजृ टुभ्राशृ टुम्लाशृ** दीप्तौ। भ्राजते॥ **फणां च सप्तानाम्** ।६।४।१२५। फण, राजृ, भ्राजृ, भ्राशृ, भ्लाशृ, स्यमु, स्वन; एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। भ्रेजे। बभ्राजे। वा भ्राशेति श्यन्वा। भ्राश्यते, भ्राशते। भ्रेशे। बभ्लाशे। भ्लाश्यते। भ्लेशे॥ **रमु** क्रीडायाम्। रमते। रेमे। रन्ता॥ **जभि जृभी** गात्रविनामे॥ **रधिजभोरचि** ।७।१।६१। नुम्। जंभते। जजंभे। जृंभते। जजृंभे॥

इत्यात्मनेपदिनः।

**श्रिञ्** सेवायाम्। श्रयति। श्रयते। शिश्राय। शिश्रिये। श्रयितासि। श्रयितासे। श्रयिष्यति। श्रयिष्यते। श्रयतु। श्रयताम्। अश्रयत्। अश्रयत। श्रयेत्। श्रयेत। श्रीयात्। श्रयिषीष्ट। अशिश्रियत्। अशिश्रियत। अश्रयिष्यत्। अश्रयिष्यत॥ **भृञ** भरणे। भरति। भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभृम। बभ्रे। बभृषे। भर्तासि। भर्तासे। भरिष्यति। भरिष्यते। भरतु। भरताम्। अभरत्। अभरत। भरेत्। भरेत। भ्रियात्। **उश्च** ।१।२।१२। ऋवर्णात्परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्[1]॥ **ह्रस्वादङ्गात्** ।८।२।२७। सिचो लोपो झलि। अभृत। अभरिष्यत्। अभरिष्यत॥ **हृञ्** हरणे। हरति। हरते। जहार। जह्रतुः। जह्रुः। जहर्थ। जह्रिव। जह्रिम। जह्रे। जह्रिषे। हर्तासि। हर्तासे। हरिष्यति। हरिष्यते॥ **धृञ्** धारणे। धरति। धरते॥ **णीञ्** प्रापणे। नयति। नयते॥ **डुपचष्** पाके। पचति। पचते। पपाच। पेचिथ, पपक्थ। पेचे। पक्ता। पक्ष्यति। पक्ष्यते॥ **भज** सेवायाम्। भजति। भजते। भेजे। भक्तासि। भक्तासे। भक्ष्यति। भक्ष्यते। भजतु। भजताम्। अभाक्षीत्। अभक्त। अभक्षाताम्॥ **यज** देवपूजासङ्गतिकरणदानेषु। यजति।

---

टिप्प०—१ सिचि वृद्धिरिति वृद्धिः। २ केचित्त्विहाङ्गग्रहणाभावे अपाचिष्टाम् अलाविष्टामित्यादावप्यतिप्रसङ्गः स्यादित्याहुस्तदपरे न क्षमन्ते। संनिपातपरिभाषयापि परिहारसंभवादिति।

यजते ॥ **लिट्यभ्यासस्योभयेषाम्** ।६।१।१७। वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । इयाज ॥ **वचिस्वपियजादीनां किति** ।६।१।१५। वचिस्वप्योर्यजादीनां च संप्रसारणं किति ॥

यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि ।
ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव ॥ १ ॥

ईजतुः । ईजुः । इयजिथ, इयष्ठ । ईजे । यष्टा । यक्ष्यति । यक्ष्यते । यजतु । यजताम् । अयजत् । अयजत । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट ॥ **वह** प्रापणे । वहति । वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ । 'झषस्तथोर्धोऽधः' ॥ **ढोढे लोपः** ।८।३।१३ ॥ **सहिवहोरोदवर्णस्य** ।६।३।११२। ढलोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । वक्ष्यते । वहतु । वहताम् । उह्यात् । वक्षीष्ट । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि ॥ **डुवप्** बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं । गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । वपते । उवाप । ऊपे । वप्ता । वप्स्यति । वप्स्यते । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् । अवप्त ॥ **वेञ्** तन्तुसन्ताने । वयति । वयते ॥ **वेञो वयिः** ।२।४।४१। वा स्यात् लिटि । इकार उच्चारणार्थः । उवाय ॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** ।६।१।१६। चात्किति संप्रसारणम् । इति यस्य प्राप्ते ॥ **लिटि वयो यः** ।६।१।३८। वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः । **वश्चास्यान्यतरस्यां किति** ।६।१।३९। वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयेस्तासावभावात्थलि नित्यमिट्,-उवयिथ । स्थानिवत्त्वेन ञित्वात् तङ्,-ऊये । ऊवे । वयादेशाभावे ॥ **वेञः** ।६।१।४०। संप्रसारणं लिटि । ववौ । ववतुः । ववुः । वविथ, ववाथ । ववे । ववाते । वविरे । वाता । ऊयात् । वासीष्ट । अवासीत् । अवासिष्टाम् । अवासिषुः ॥ **व्येञ्** संवरणे । व्ययति । व्ययते ॥ **न व्यो लिटि** ।६।१।४६। आत्वम् । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसार-

णम् । उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन? विव्याय । विव्यतुः । विव्युः ॥ **इडत्त्यर्तिव्ययतीनाम्** ।७।२।६६। अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् । विव्ययिथ । विव्यथुः । विव्य । विव्याय । विव्यय । विव्यिव । विव्यिम । विव्ये । व्याता । व्यास्यति । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त ॥ **ह्वेञ् स्पर्धायां शब्दे च** । ह्वयति । ह्वयते ॥ **अभ्यस्तस्य च** ।६।१।३३। अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणम् । जुहाव । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते ॥ **लिपिसिचिह्वश्च** ।३।१।५३। च्लेरङ् ॥ **आत्मनेपदेष्वन्यतरस्याम्** ।३।१।५४। अह्वत् । अह्वताम् । अह्वत, अह्वास्त ॥ **राजृ दीप्तौ** । राजति, राजते । रराज । रेजतुः, रराजतुः । रेजुः, रराजुः । रेजे, रराजे ॥ **हिक्क अव्यक्ते शब्दे** । हिक्कति । हिक्कते ॥ **अञ्चु गतौ पूजने च** । अञ्चति । अञ्चते । अच इत्येके । अचीत्यपरे ॥ **टुयाचृ याच्ञायाम्** । याचति, याचते ॥ **बुधिर् बोधने** । बोधति । बोधते । अबुधत् । अबोधीत् । अबोधिष्ट ॥ **खनु अवदारणे** । खनति, खनते । चखान । चख्नतुः । चख्नुः । चख्ने । खायात्, खन्यात् ॥ **चीवृ आदानसंवरणयोः** । चीवति । चीवते ॥ **चायृ पूजानिशामनयोः** । चायति । चायते ॥ **व्यय गतौ** । व्ययति, व्ययते ॥ **दाशृ दाने** । दाशति, दाशते ॥ **भेषृ भये** । गतावित्येके । भेषति, भेषते ॥ **अस** गतिदीप्त्यादानेषु । असति, असते । आस, आसे । अयं षान्तोऽपि ॥ **स्पश** बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति, स्पशते ॥ **लष कान्तौ** । श्यन् वा । लष्यति । लषति । लषते । लष्यते । लेषे ॥ **चष भक्षणे** । चषति । चषते ॥ **झष** आदानसंवरणयोः । झषति । झषते ॥ **दासृ दाने** । दासति, दासते ॥ **धावु गतिशुद्ध्योः** । धावति, धावते ॥ इति **भ्वादिः** ॥

## अथादादिगणः ॥ २ ॥

**ऋतेरीयङ्** ।३।१।२९। स्वार्थे ॥ **ऋतिः**[2] सौत्रः । जुगुप्सायामिति बहवः ।

---

टिप्प०–१ अत्र विकल्पेनात्वं ये विभाषेत्यनेनेति ज्ञेयम् । २ ऋतेरिति तान्तोऽयं धातुरिका निर्दिष्टो नत्विकारान्तः । 'वञ्चिलुञ्च्यृतश्च' इति निर्देशात् । केचित्त्विदन्तमाहुः । इदन्तत्वे तु 'एरनेकाच' इति यण् स्यात् ॥

कृपायां चेत्येके। ऋतीयते। ऋतीयांचक्रे। आयादय इतीयङभावे शेषात्कर्तरीति परस्मैपदम्। आनर्त। अर्तिता। अर्तिष्यतीत्यादि॥ अद् भक्षणे॥ **अदिप्रभृतिभ्यः शपः** ।२।४।७२। लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः॥ **लिट्यन्यतरस्याम्** ।२।४।४०। अदो घस्लृ वा स्यात्। जघास। उपधालोपः। घस चर्त्वे॥ **शासिवसिघसीनां च** ।८।३।६०। इण्कुभ्यामेषां सस्य षः। जक्षतुः। जक्षुः। जघसिथ। आदतुः। आदुः। आदिथ। अत्ता। अत्स्यति। अत्तु। अत्तात्। अत्ताम्। अदन्तु॥ **हुझल्भ्यो हेर्धिः** ।६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम॥ **अदः सर्वेषाम्** ।७।३।१००। अदः परस्यापृक्तस्य सार्वधातुकस्याट् स्यात्। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः॥ **लुङ्सनोर्घस्लृ** ।२।४।३७। अदः। अघसत्। आत्स्यत्॥ हन हिंसागत्योः॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** ।६।४।३७। अनुनासिकान्तानामेषां लोपः। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः। हतः। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः। हन्मः॥ **वमोर्वा** ।८।४।२३। उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णो वा। प्रहण्मि, प्रहन्मि। प्रहण्वः, प्रहन्वः। प्रहण्मः, प्रहन्मः। जघान। जघ्नतुः। जघ्नुः॥ **अभ्यासाच्च** ।७।३।५५। हन्तेर्हस्य कुत्वं स्यात्। जघनिथ, जघन्थ। जघ्नथुः। जघ्न। जघान। जघन। जघ्निव। जघ्निम। हन्ता। हनिष्यति। हन्तु। हतात्, हताम्। घ्नन्तु॥ **हन्तेर्जः** ।६।४।३६। हौ॥ **असिद्धवदत्राभात्** ।६।४।२२। इत ऊर्ध्वमापादपरिसमाप्तेराभीयम्। समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्। इति जस्यासिद्धत्वान्न हेर्लुक्। जहि। हतात्। हतम्। हत। हनानि। हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहन्। अह-

टिप्प०—१ अनुनासिकेति लुप्तषष्ठीकमसमस्तं सौत्रत्वाल्लुप्तविभक्तिकमित्यर्थः। वनतीतरेषां विशेषणम्।

तम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् ॥ **आर्धधातुके** ।२।४।३५। इत्यधिकृत्य ॥ **हनो वध लिङि** ।२।४।४२। **लुङि च** ।२।४।४३। वध्यात् । वध्यास्ताम् । अवधीत् । अहनिष्यत् । **यु** मिश्रणेऽमिश्रणे च ॥ **उतो वृद्धिर्लुकि हलि** ।७।३।८९। लुग्विषये उतो वृद्धिः स्यात्पिति हलादौ सार्वधातुके, न त्वभ्यस्तस्य। यौति। युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । युयुवतुः । युयुवुः । युयविथ, युयोथ । युयुवथुः । युयुव । युयाव, युयव । युयुविव । युयुविम । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह वृद्धिर्न । भाष्ये पिच्च ङिन्न, ङिच्च पिन्नेति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् ॥ **या** प्रापणे । याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥ **लङः शाकटायनस्यैव** ।३।४।१११। आदन्ताल्लङो झेर्जुस्वा । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयासत् । एवं **वा** गतिगन्धनयोः ॥ **भा** दीप्तौ ॥ **ष्णा** शौचे । वान्यस्य संयोगादेरित्येत्वम् । स्नेयात् । स्नायात् ॥ **श्रा** पाके ॥ **द्रा** कुत्सायां गतौ ॥ **प्सा** भक्षणे ॥ **पा** रक्षणे ॥ **रा** दाने ॥ **ला** आदाने ॥ **दाप्** लवने ॥ **ख्या** प्रकथने । अयं सार्वधातुक एव प्रयोक्तव्यः ॥ **विद** ज्ञाने ॥ **विदो लटो वा** ।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे–वेत्ति । वित्तः । विदन्ति ॥ **उषविदजागृभ्योऽन्यतरस्याम्** ।३।१।३८। एभ्यो लिट्याम् वा । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदांचकार । विवेद । वेदिता । वेदिष्यति ॥ **विदांकुर्वन्त्वित्यन्यतरस्याम्** ।३।१।४१। वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते इति-

---

टिप्प०-१ 'नाभ्यस्तस्याचि पिति' इत्यनुवृत्तेराह—नत्वभ्यस्तस्येति । २ विशेषविहितेन ङित्वेन पित्वस्य बाधात् । ३ वेत्तेरिति पञ्चमीयं नतु षष्ठी । तेन विद्यतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशास्तदाह—वेत्तेरिति । ४ न विवक्षिते इति तयोर्नान्तरीयकतया उच्चार्यमाणत्वादिति भावः ।

शब्दात् ॥ **तनादिकृञ्भ्य उः** ।३।१।७९। शपोऽपवादः । विदांकरोतु ॥ **अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदांकुरुतात् । विदांकुरुताम् । विदांकुर्वन्तु । विदांकुरु । विदांकरवाणि । वेत्त । अवेत् । अवित्ताम् । अविदुः ॥ **दश्च** ।८।२।७५। धातोः पदान्तस्य दस्य सिपि रुर्वा । अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । विद्यासुः । अवेदिष्यत् ॥ अस् भुवि । अस्ति ॥ **श्नसोरल्लोपः** ।६।४।१११। श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥ **अस्तेर्भूः** ।२।४।५२। आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु । स्तात् । स्ताम् । सन्तु ॥ **घ्वसोरेद्धावभ्यासलोपश्च** ।६।४।११९। घोरस्तेश्चैत्वं[1] हौ अभ्यासलोपश्च । आभीयत्वाद्धेर्द्धिः । एधि । स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम्[2] । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः**[3] ।८।३।८७। उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षो यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम्? अभिस्तः ॥ रु शब्दे ॥ **तुरुस्तुशम्यमः सार्वधातुके** ।७।३।९५। एभ्यः सार्वधातुकस्य हलादेस्तिङ ईडा । नाभ्यस्तस्येत्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम्[4] । रवीति, रौति । रुवीतः, रुतः । हलादेः किम्? रुवन्ति । तिङः किम्? शाम्यति । सार्वधातुके किम्? आशिषि–रूयात् । विध्यादौ तु–रुयात्, रुवीयात् । अरावीत् । अरविष्यत् ॥ तु इति सौत्रो धातुः गतिवृद्धिहिंसासु । तवीति । तौति । तुवीतः, तुतः । तुवन्ति । तुवाव । तोता । तोष्यति ॥ णु स्तुतौ । नौति । नुनाव । नविता ॥ टुक्षु शब्दे । क्षौति ।

---

टिप्प०–१ एत्वमलोऽन्त्यस्य, लोपस्तु शित्त्वात्सर्वस्येति भाष्यादौ स्पष्टम् । २ आस्तामित्यत्र श्नसोरित्यल्लोपस्याभीयत्वेनासिद्धत्वादाट् भवति । ३ प्रादुसिति सान्तमव्ययम् । प्रादुषिति प्राचां षान्तपाठः प्रामादिकः । ४ एभ्यः परस्य पितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकम् ।

चुक्षाव । क्षविता ॥ क्ष्णु तेजने । क्ष्णौति । क्ष्णविता । अक्ष्णावीत् ॥ ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता ॥ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सौति । सुतः । सुषाव । सोता । असौषीत् ॥ कु शब्दे । कौति । चुकाव । कोता ॥ इण् गतौ । एति । इतः ॥ **इणो यण्** ।६।४।८१। अजादौ प्रत्यये । इयङोऽपवादः । यन्ति ॥ **अभ्यासस्यासवर्णे** ।६।४।७८। अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥ **दीर्घ इणः किति** ।७।४।६९। इणोऽभ्यासस्य दीर्घः किति लिटि । ईयतुः । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् । ईयात् ॥ **एतेर्लिङि** ।७।४।२४। उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । (उभयत आश्रयणे नान्तादिवत्) ॥ **अन्तादिवच्च** ।६।१।८५। योयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् । अभीयात् । अणः किम्? समेयात् ॥ **इणो गा लुङि** ।२।४।४५। गातिस्थेति सिचो लुक् । अगात् । अगाताम् । अगुः । ऐष्यत् ॥ इक् स्मरणे । अयमधिपूर्व एव । 'अधीगर्थदयेशां कर्मणि' इति लिङ्गात् । (इण्वदिक इति वक्तव्यम्) । अधियन्ति । अध्यगात् । केचित्त्वार्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यण्न । तथा च भट्टिः—ससीतयो राघवयोरधीयन्निति[2] ॥ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अविताम् । अवियन् । अटि सति अनेकाच्त्वाद्यणिति केचित् । अव्यन् । अत्र इकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । इयात् । ऐषीत् ॥ वच परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वक्तु । वग्धि । वच्यात् । उच्यात् ॥ **अस्यतिवक्तिख्यातिभ्योऽङ्** ।३।१।५२। च्लेः ॥ वच उम्

---

टिप्प०-१ स्थानिवत्सूत्रेणैव गतार्थमिदम् । न चाल्विध्यर्थमिदमस्त्विति शङ्क्यम् । अस्याप्यल्विधावनिष्टत्वात् । अन्यथा अयजे इन्द्रमित्यत्र सवर्णदीर्घापत्तेः । २ राघवयोरित्यत्र 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी ।

।७।४।२०। अङि । अवोचत् । अवक्ष्यत् ॥ मृजू शुद्धौ ॥ मृजेर्वृद्धिः ।७।२।११४। इको धातुप्रत्यये परे । मार्ष्टि । मृष्टः । क्ङित्यजादौ वेष्यते । मृजन्ति । मार्जन्ति । ममार्ज । ममार्जतुः, ममृजतुः । ममार्जिथ, ममार्ष्ठ । मार्जिता, मार्ष्टा । मार्ष्टु । मृड्ढि । अमार्ट्, अमार्ड् । अमार्जीत् । अमार्क्ष्यत् । अमार्जिष्यत् ॥ रुदिर् अश्रुविमोचने ॥ रुदादिभ्यः सार्वधातुके ।७।२।७६। रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि ॥ रुदश्च पञ्चभ्यः ।७।३।९८। हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् ॥ अड् गार्ग्यगालवयोः ।७।३।९९। अरोदीत् । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् । (असिद्धं बहिरङ्गमन्तरङ्गे) । रुद्यात् । अरुदत् । अरोदीत् । अरोदिष्यत् ॥ ञिष्वप् शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुष्वपिथ, सुष्वप्थ ॥ सुविनिर्दुर्भ्यः सुपिसूतिसमाः ।८।३।८८। एभ्यः सुप्यादेः सस्य षः किति लिटि । परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम् । (पूर्वत्रासिद्धीयमद्विर्वचने) । सुषुपुपतुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात् । ततः पूर्वं हलादिः शेषः । नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत् । अस्वप्त । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वप्स्यत् ॥ श्वस प्राणने । श्वसिति । श्वसितः । शश्वास । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत् । अश्वसत् । अश्वसिताम् । अश्वसन् । श्वस्यात् । ह्यन्तेति वृद्धिर्न । अश्वसीत् ॥ अन च । अनिति । आन । अनिता । आनीत् । आनत् ॥ अनितेः ।८।४।१९। उपसर्गस्थान्निमित्तात् परस्यानिते-

---

टिप्प०–१ मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे । व्रश्चेति षत्वमिति सिद्धान्तकौमुद्याम् । २ धित्वं नेति । सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधानाच्चेति भावः । ३ हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः । परस्परापेक्षया व्याप्यनिमित्तकमन्तरङ्गं व्यापकनिमित्तं च बहिरङ्गमित्युत्सर्गः । विलम्बोपस्थितिकत्वं च बहिरङ्गस्यासिद्धत्वे बीजम् ।

र्नस्य णः । प्राणिति ॥ **जक्ष** भक्षहसनयोः । जक्षिति । जक्षितः ॥ **अदभ्यस्तात्** ।७।१।४। झस्य । अन्तापवादः । जक्षति । अजक्षीत् । अजक्षत् । अजक्षिताम् । सिजभ्यस्तेति झेर्जुस् । अजक्षुः ॥ **जागृ** निद्राक्षये । जागर्ति । जागृतः । जाग्रति । जागरांचकार । जजागार ॥ **जाग्रोऽविचिण्णल्ङित्सु** ।७।३।८५। जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । जजागरुः । जागरिता । अजागः । अजागृताम् ॥ **जुसि च** ।७।३।८३। अजादौ जुसि इगन्ताङ्गस्य गुणः । अजागरुः । अजादौ किम् ? जागृयुः । आशिषि तु—जागर्यात् । जागर्यास्ताम् । जागर्यासुः । लुङि-अजागरीत् । **दरिद्रा** दुर्गतौ । दरिद्राति ॥ **इद्दरिद्रस्य** ।६।४।११४। हलादौ क्ङिति सार्वधातुके । दरिद्रितः ॥ **श्नाभ्यस्तयोरातः** ।६।४।११२। लोपः क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्रांचकार । 'आत औ णलः' इत्यत्र ओ इत्येव सिद्धे औविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव ज्ञापकादाम्नेत्येके । ददरिद्रौ । (दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः) । (लुङि वा) । (सनि ण्वुलि ल्युटि च न) । दरिद्रिता । अदरिद्रात् । इट्सकौ । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरिद्रात् । इट्सकौ । अदरिद्रासीत् ॥ **चकासृ** दीप्तौ । चकास्ति । चकास्तः । चकासति । चकासांचकार । चकासिता । चकास्तु । चकाधि ॥ **तिप्यनस्तेः** ।८।२।७३। पदान्तस्य सस्य दः[2] । अचकात्, अचकाद् । अचकास्ताम् । अचकासुः ॥ **सिपि धातो रुर्वा** ।८।२।७४। पदान्तस्य सस्य । पक्षे दः । अचकाः, अचकात् ॥ **शासु** अनुशिष्टौ । शास्ति ॥ **शास इदङ्हलोः** ।६।४।३४। शास उपधाया इत्स्यादङि[3] हलादौ क्ङिति च । शिष्टः । शासति । शशास । शशासतुः । शास्तु । शिष्टात् । शिष्टाम् । शासतु ॥ **शा हौ** ।६।४।३५। शास्तेः । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः, अशात् । शिष्यात् ॥

---

टिप्प०–१ विशब्देन वादिप्रत्ययो गृह्यते । इकारस्तूच्चारणार्थ इति वदतां मते कसावपि न भवति । २ दः स्यात्तिपि नत्वस्तेः । ३ अङ्साहचर्यात्परस्मैपद एवेत्वम् । नेह । आशास्ते ।

**सर्तिशास्त्यर्तिभ्यश्च** ।३।१।५६। एभ्यश्च्लेरङ् कर्तरि लुङि । अशिषत् । अशासिष्यत् ॥

॥ इति परस्मैपदम् ॥

**शीङ्** स्वप्ने ॥ **शीङः सार्वधातुके गुणः** ।७।४।२१। शेते । शयाते ॥ **शीङो रुट्** ।७।१।६। झादेशस्यातः । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥ **इङ्** अध्ययने । इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ॥ **गाङ् लिटि** ।२।४।४९। इङः । अधिजगे । अध्येता । अध्येष्यते । अधीताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः** ।२।४।५०। इङो गाङ् वा ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।१।२।१। गाङादेशा[1]त्कुटादिभ्यश्चाञ्णितः प्रत्यया ङितः स्युः ॥ **घुमास्थागापाजहातिसां हलि** ।६।४।६६। एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अ[2]ध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत ॥ **ईर** गतौ कम्पने च । ईर्ते । ईरांचक्रे । ईरिता । ईरिष्यते । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट ॥ **ईड** स्तुतौ । ईट्टे ॥ **ईशः से** ।७।२।७७॥ **ईडजनोर्ध्वे च** ।७।२।७८। ईशीड्जनां से-ध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्या[3]र्थः । ईडिते । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात्,—ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात् । ऐड्ढ्वम् ॥ **ईश** ऐश्वर्ये । इष्टे । ईशिषे । ईशिध्वे ॥ **आस** उपवेशने । आस्ते । दयायासश्चेत्याम् । आसांचक्रे । आस्स्व । आध्वम् । आसिष्ट ॥ **आङः शासु** इच्छायाम् । आशास्ते । आशासाते ॥ **वस** आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता ॥ **णिसि** चुम्बने ।

---

टिप्प०–१ इह गाङ् गताविलस्य न ग्रहणम् । तङर्थतया ङकारानुबन्धस्य चरितार्थत्वात् । आदेशङकारस्त्वचरितार्थः । स्थानिवद्भावेनैव तङः सिद्धत्वादत आह—गाङादेशादिति । २ सिचो ङित्वादीत्वम् । ३ वैचित्र्यार्थ इति । ध्वे इत्यस्य पूर्वत्रापकर्षः सेइत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधार्थ इत्यर्थः ।

निंस्ते ॥ **णिजि शुद्धौ** । निङ्क्ते । निङ्क्षे । निञ्जिता ॥ **वृजी वर्जने** । वृक्ते, वृजाते । इदिदित्यन्ये । वृङ्क्ते । **पृची संपर्चने** । पृक्ते ॥ **पूङ् प्राणिगर्भविमोचने** । सूते । सुषुवे । सुषुविषे । सोता । सविता । सुवै । सविषीष्ट । असविष्ट, असोष्ट ॥ **चक्षिङ् व्यक्तायां वाचि** । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । नुम्तु न, अन्त्य इदिति व्याख्यानात् । चष्टे । चक्षाते । आर्धधातुके ॥ **चक्षिङः ख्याञ्** ।२।४।५४। **वा लिटि** ।२।४।५५। अत्र भाष्ये ख्शादिरयमादेशः । असिद्धकाण्डे शस्य यो वेति स्थितम् । ञित्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । चष्टाम् । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् । अस्यतिवक्तीत्यङ् । अख्यत् । अख्यत । अक्शासीत् । अक्शास्त । (वर्जने ख्शाञ् नेष्टः) । समचक्षिष्ट । इत्यादि ॥ **द्विष अप्रीतौ** । द्वेष्टि । द्विष्टे । द्वेक्ष्यति । द्विड्ढि । द्वेषै । अद्वेट् ॥ **द्विषश्च** ।३।४।११२। लङो झेर्जुस्वा । अद्विषुः । अद्विषन् । अद्विक्षत् ॥ **दुह प्रपूरणे** । 'दादेर्धातोर्घः' इति हस्य घः । दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुह्वहे । दुह्महे । दुदोह । दुदुहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्धु । दुग्धात्, दुग्धाम् । दुहन्तु । दुग्धि । दुग्धात्, दुग्धम् । दुग्ध । दोहानि । दुग्धाम्, दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात् । दुहीत । धुक्षीष्ट । अधुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** ।७।३।७३। एषां क्सस्य लुग्वा दन्त्ये तङि । अधुक्षत । अदुग्ध ॥ **क्सस्याचि** ।७।३।७२। [2]अजादौ तङि क्सस्य लोपः । अधुक्षाताम् । अधुक्षन्त । अधुक्षथाः, अधुग्धाः । अधुक्षाथाम्, अधुक्षध्वम् । अधुग्ध्वम् । अधुक्षि । अधुक्षावहि । अदुह्वहि, अधुक्षामहि । अधोक्ष्यत् । अधोक्ष्यत ॥ एवं **दिह उपचये** । उपचयो वृद्धिः ॥ **लिह आस्वादने** । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते, लिहते । लिक्षे ।

---

टिप्प०–१ अनिट्कृपु णिजिर् इति जौहोत्यादिकस्य ग्रहणादयं सेट् । २ अङ्गाक्षिप्तप्रत्ययोऽत्र विशेष्यः ।

लिहाथे । लीढ्वे । लेढु । लीढात्, लिढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट् । अलीढाम् ॥ ब्रूञ् व्यक्तायां वाचि ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः** ।३।४।८४। ब्रुवो लटस्तिवादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ॥ **आहस्थः** ।८।२।३५। झलि । चर्त्वम् । आत्थ । आहतुः ॥ **ब्रुव ईट्** ।७।३।९३। ब्रुवो हलादेः पित ईट् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥ **ब्रुवो वचिः** ।२।४।५३। आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । ऊचे । वक्ता । वक्ष्यति । वक्ष्यते । ब्रवीतु । ब्रूतात् । ब्रूताम् । ब्रूहि । ब्रुवाणि । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षीष्ट । अवोचत् । अवक्ष्यत् । चर्करीतं च । चर्करीतमिति यङ्लुगन्तमदादौ बोध्यम् ॥ ऊर्णुञ् आच्छादने ॥ **ऊर्णोतेर्विभाषा** ।७।३।९०। वृद्धिर्वा हलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । (ऊर्णोतेराम् नेति वाच्यम्)[1] ॥ **नन्द्राः संयोगादयः** ।६।१।३। अचः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य[2] द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ **विभाषोर्णोः** ।१।२।३। इडादिप्रत्ययो वा ङिद्वत् । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णविता । ऊर्णुविता । ऊर्णौतु । उर्णवानि । ऊर्णवै ॥ **गुणोऽपृक्ते** ।७।३।९१। ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । और्णोत् । और्णोः । और्णुतम् । ऊर्णुयात् । ऊर्णुयाताम् । ऊर्णूयात् । ऊर्णूयास्ताम् । ऊर्णुविषीष्ट, ऊर्णविषीष्ट । और्णुवीत् ॥ **ऊर्णोतेर्विभाषा** ।७।२।६। इडादौ परस्मैपदपरे सिचि वा वृद्धिः । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णवीत् । और्णविष्टाम् ॥ **इत्यदादयः** ॥

## अथ जुहोत्यादिगणः ॥ ३ ॥

हु दानादनयोः[3][4] ॥ **जुहोत्यादिभ्यः श्लुः** ।२।४।७५। शपः ॥ **श्लौ** ।६।१।१०।

---

टिप्प०–१ ऊर्णोतेर्णुवद्भावो वाच्यः इति वक्ष्यमाणस्यामभावोऽपि फलमिति भावः । २ उपदेशे नकार एव । णत्वं तु 'रषाभ्याम्' इत्यनेनेति भावः । णत्वस्यासिद्धतया नुशब्दस्यैव द्वित्वकरणात् । यद्वृच्छया शास्त्रप्रवृत्तिस्तद्द्वितीयप्रयोगस्यैव साधुत्वान्वाख्यानान्नोत्तरखण्डे णश्रवणम् । ३ यद्यपि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनमेव दानं तथापीह प्रयोगमनुसृत्य हविर्द्रव्यस्याग्न्यादौ प्रक्षेप एव दानं ज्ञेयम् । ४ अयं 'आदाने च' इत्येके । 'प्रीणनेऽपि' इति भाष्यम् ।

धातोर्द्वे स्तः । जुहोति । जुहुतः । हुश्नुवोरिति यण् । जुह्वति ॥ **भीह्रीभृहुवां श्लुवच्च** ।३।१।३९। एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्यं च । जुहवांचकार । जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ॥ **ञिभी भये** । बिभेति ॥ **भियोऽन्यतरस्याम्** ।६।४।११५। इद्वा स्याद्धलादौ[1] सार्वधातुके क्ङिति । बिभितः, बिभीतः । बिभ्यति । बिभयांचकार, बिभाय । भेता । भेष्यति । बिभेतु । बिभितात्, बिभीताम् । अबिभेत् । बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् ॥ **ह्री लज्जायाम्** । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयांचकार । जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रियात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥ **पॄ पालनपूरणयोः** ॥ **अर्तिपिपर्त्योश्च** ।७।४।७७। अभ्यासस्य इत्स्यात् श्लौ । पिपर्ति ॥ **उदोष्ठ्यपूर्वस्य** ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उः ॥ **हलि च** ।८।२।७७। रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि । पिपूर्तः । पिपुरति । पपार ॥ **शॄदॄप्रां ह्रस्वो वा** ।७।४।१२। किति लिटि । पप्रतुः । पप्रुः ॥ **ॠच्छत्यॄताम्** ।७।४।११। तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणो लिटि । पपरतुः । पपरुः ॥ **वॄतो वा** ।७।२।३८। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । परिता, परीता । परिष्यति, परीष्यति । पिपर्तु, पिपरतु । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पिपूर्युः । पूर्यात् । अपारीत् ॥ **सिचि च परस्मैपदेषु** ।७।२।४०। अत्र वृत इटो न दीर्घः । अपारिष्टाम् । अपरिष्यत्, अपरीष्यत् ॥ **ओहाक् त्यागे** । जहाति ॥ **जहातेश्च** ।६।४।११६। इत्स्याद्वा हलादौ क्ङिति । जहितः ॥ **ई हल्यघोः** ।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि । जहीतः । जहति । जहौ । हाता । हास्यति । जहातु, जहितात्, जहीतात् ॥ **आ च हौ** ।६।४।११७। जहातेराच्चादिदीतौ स्तः ।

---

टिप्प०–१ केचिदत्र हलादौ क्ङितीत्येतन्नातीवोपयुज्यते । इत्वविधानस्य बिभित इत्यादौ चरितार्थत्वात् । बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः ।

जहाहि[1], जहिहि, जहीहि। अजहात्। अजहुः। अजहाः॥ **लोपो यि** ।६।४।११८। जहातेरालोपो यादौ सार्वधातुके। जह्यात्। एर्लिङीति एत्वम्। हेयात्। अहासीत्। अहास्यत्॥ **ऋ** गतौ। ईयर्ति[2]। इयृतः। ईयूरति[3]। आर। आरतुः। आरुः। इडत्त्यर्तीति नित्यमिट्। आरिथ। अर्ता। अरिष्यति। इयर्तु। इयराणि। ऐयः[4]। ऐयृताम्। ऐयरुः। इयृयात्। अर्यात्[5]। आरत्[6]। आरिष्यत्॥ **माङ्** माने शब्दे च॥ **भृञामित्** ।७।४।७६। भृञ् माङ् ओहाङ् एषामभ्यासस्येत्स्याच्छ्लौ। मिमीते। मिमाते। श्नाभ्यस्तेति आतो लोपः। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत॥ **ओहाङ्** गतौ। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहिताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत॥ **डुभृञ्** धारणपोषणयोः। बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभरांचकार। बभार। बभर्थ। बभृव। बिभरांचक्रे। बभ्रे। भर्ता। भरिष्यति। भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभरुः। अबिभृत। बिभ्रीत। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। अभरिष्यत्। अभरिष्यत। **डुदाञ्** दाने। ददाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ। ददे। दाता। दास्यति। दास्यते। ददातु। देहि। दत्ताम्। अददात्। अदत्त। दद्यात्। ददीत। देयात्। दासीष्ट। अदात्। अदाताम्। अदुः॥ **स्थाघ्वोरिच्च** ।१।२।१७। अनयोरिदन्तादेशः सिच्च किदात्मनेपदेषु। अदित। अदास्यत्। अदास्यत॥ **डुधाञ्** धारणपोषणयोः॥ **दधस्तथोश्च** ।८।२।३८। द्विरुक्तस्य[7]

---

टिप्प०–१ तथा च भट्टिकाव्ये–'जहिहि जहीहि जहाहि रामभार्याम्' इति प्रयोगः। २ अभ्यासस्येयङ् अभ्यासादुत्तरस्य तु गुणः। ३ अदभ्यस्तादित्यत्। ४ अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम्। सार्वधातुकेति ऋकारस्य गुणः। अभ्यासस्यासवर्णे इति इयङ्। इतश्चेतीकारलोपः। हल्ङ्याब्भ्य इति तलोपः। रेफस्य विसर्गः। आडजादीनाम् आटश्चेति वृद्धिः। ५ गुणोर्तीति गुणः। ६ सर्तिशास्त्यर्तीत्यङि ऋदृशोऽङीति गुणः। ७ दध इति कृतद्विर्वचनाभ्यासकार्यो धाञेव गृह्यते, न तु दध धारणे इत्ययमिति व्याचष्टे–द्विरुक्तस्येति।

झषन्तस्य धाञो बशो भष् तथयोः स्ध्वोश्च परतः। धत्तः। दधति । दधासि। धत्थः। धत्ते। धत्से। धध्वे। धेहि॥ **णिजिर् शौचपोषणयोः ॥ निजां त्रयाणां गुणः श्लौ ।७।४।७५।** निज्विज्विषामभ्यासस्य गुणः स्याच्छ्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेनिक्ते। निनेज। निनिजे। नेक्ता। नेक्ष्यति। नेक्ष्यते। नेनेक्तु। नेनिग्धि॥ **नाभ्यस्तस्याचि पिति सार्वधातुके ।७।३।८७।** लघूपधगुणो न। नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अनेनिक्त। नेनिज्यात्। नेनिजीत। निज्यात्। निक्षीष्ट। अनिजत्। अनैक्षीत्। अनिक्त। अनेक्ष्यत्। अनेक्ष्यत। एवं॥ **विजिर् पृथग्भावे॥ विष्लृ व्याप्तौ॥ इति जुहोत्यादयः॥**

## अथ दिवादिगणः॥ ४॥

**दिवु**[1] क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु॥ **दिवादिभ्यः श्यन् ।३।१।६९।** कर्तरि सार्वधातुके। शपोऽपवादः। हलि चेति दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेविष्यत्। एवं॥ **षिवु** तन्तुसन्ताने। **सिवादीनां**[2] **वाऽड्व्यवायेऽपि ।८।३।७१।** परिनिविभ्यः परेषामेषां सस्य षः। पर्यषीव्यत्, पर्यसीव्यत्॥ **नृती** गात्रविक्षेपे। नृत्यति। ननर्त। नर्तिता॥ **सेऽसिचि कृतचृतच्छृदतृदनृतः ।७।२।५७।** एभ्यः सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा। नर्तिष्यति, नर्त्स्यति। नृत्यात्। अनर्तीत्॥ **त्रसी** उद्वेगे। वा भ्राशेति श्यन्वा। त्रस्यति, त्रसति। तत्रास॥ **वा**[3] **जॄभ्रमुत्रसाम् ।६।४।१२४।** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा। त्रेसतुः। तत्रसतुः। त्रेसिथ, तत्रसिथ। त्रसिता॥ **शो** तनूकरणे॥ **ओतः श्यनि ।७।३।७१।** लोपः श्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः।

---

टिप्प०–१ उदित्करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च। २ सिवुसहसुट्स्तुस्वञ्जः सिवादयः। ३ अप्राप्तविभाषेयम्।

शशुः । शाता । शास्यति । अशात् । अशाताम् । इट्सकौ । अशासीत् । अशासिष्टाम् । छो छेदने । छ्यति ॥ षो अन्तकर्मणि । स्यति । ससौ । सेयात् ॥ दो अवखण्डने । द्यति । ददौ । देयात् । अदात् ॥ व्यध ताडने । विध्यति । विव्याध । विविधतुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् आपरस्मैपदात् । अपुषत् ॥ शुष शोषणे । शुष्यति । शुशोष । अशुषत् ॥ णश अदर्शने । नश्यति । ननाश । नेशतुः ॥ **रधादिभ्यश्च** ।७।२।४५। रधू नशू तृपू दृपू द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् । नेशिथ ॥ **मस्जिनशोर्झलि** ।७।१।६०। नुम् स्यात् । ननंष्ठ । नेशिव, नेश्व । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ॥ **नशेः षान्तस्य** ।८।४।३६। णत्वं न । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति ॥ रध हिंसासंराद्ध्योः ॥ **रधिजभोरचि** ।७।१।६१। नुम् । ररन्ध । ररन्धतुः । ररन्धिथ, ररद्ध । ररन्धिव, ररन्ध्व ॥ **नेट्यलिटि रधेः** ।७।१।६२। लिड्वर्जे इटिरधेर्नुम्न । रधिता, रद्धा । रधिष्यति । रत्स्यति । अङि नुम् । अनिदितामिति नलोपः । अरधत् ॥ तृप प्रीणने । तृप्यति । तत्रप्थ, ततर्प्थ, ततर्पिथ । तर्पिता, तर्प्ता, त्रप्ता । ( स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ) अतर्पीत् । अत्राप्सीत, अतार्प्सीत् । अतृपत् ॥ दृप हर्षमोहनयोः । दृप्यति । रधादित्वादिमौ वेट्कावमर्थमनुदात्तता' ॥ द्रुह जिघांसायाम् । द्रुह्यति । वा द्रुहेति वा घः । पक्षे ढः । दुद्रोग्ध, दुद्रोढ, दुद्रोहिथ । द्रोहिता, द्रोग्धा, द्रोढा । अद्रुहत् ॥ मुह वैचित्त्ये । वैचित्त्यमविवेकः । मुह्यति । मुमोहिथ । मुमोग्ध । मुमोढ । मोहिता, मोग्धा, मोढा । मोहिष्यति । मोक्ष्यति । अमुहत् ॥ ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ । सुष्णुहिव । सुष्णुह्व । स्नोहिता, स्नोग्धा, स्नोढा । स्नोहि-

टिप्प०–१ श्यनः सार्वधातुकमपिदिति ङित्वे ग्रहिज्येति संप्रसारणम् । २ पदस्येत्युक्तेऽपि पदस्येत्यस्य विशेषणेन पान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ञापयति–भूतपूर्वेति ।

ष्यति । स्नोक्ष्यति । अस्नुहत् ॥ ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । स्नेहिता । स्नेग्धा । स्नेढा । अस्निहत् ॥ तुष तुष्टौ । तुष्यति ॥ दुष वैकृत्ये । दुष्यति ॥ श्लिष आलिङ्गने । श्लिष्यति ॥ श्लिष आलिङ्गने ।३।१।४६। च्लेः क्सः । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गने किम् ? समश्लिषज्जतु काष्ठम् । प्रत्यासत्ताविह श्लिषिः ॥ क्रुध क्रोधे । क्रुध्यति ॥ क्षुध बुभुक्षायाम् । क्षुध्यति ॥ शुध शौचे । शुध्यति ॥ षिधु संराद्धौ । सिध्यति ॥ शमु उपशमे ॥ शमामष्टानां दीर्घः श्यनि ।७।३।७४। शम् तम् दम् श्रम् भ्रम् क्षम् क्लम् मदामचो दीर्घः । प्रणिशाम्यति । शेमतुः । शेमुः । शेमिथ । शमिता । अशमत् ॥ तमु काङ्क्षायाम् । ताम्यति । तमिता । अतमत् ॥ दमु उपशमे । दाम्यति । दमिता । अदमत् ॥ श्रमु तपसि खेदे च । श्राम्यति । अश्रमत् ॥ भ्रमु अनवस्थाने । वा भ्राशेति श्यन्वा । भ्राम्यति । भ्रमति । भ्रेमतुः । बभ्रमतुः । अभ्रमत् ॥ क्षमू सहने । क्षाम्यति । चक्षमिथ, चक्षन्थ । चक्षमिव, चक्षण्व । क्षमिता, क्षन्ता । अमयपित् । भ्वादिस्तु षित् । अषितः क्षाम्यते क्षान्तिः, क्षमूषः क्षमते क्षमा ॥ क्लमु ग्लानौ । ष्ठिवुक्लमुचमामिति दीर्घः । क्लाम्यति । क्लमिता । अक्लमत् ॥ मदी हर्षे । माद्यति । अमदत् ॥ असु क्षेपणे । अस्यति । आस । असिता ॥ अस्यतेस्थुक् ।७।४।१७। अङि । अस्यतीत्यङ् । आस्थत् ॥ यसु प्रयत्ने ॥ यसोऽनुपसर्गात् ।३।१।७१। संयसश्च ।३।१।७२। श्यन्वा । यस्यति । यसति । संयस्यति, संयसति । अनुपसर्गात्किम् ? प्रयस्यति ॥ जसु मोक्षणे । जस्यति ॥ तसु उपक्षये ॥ दसु च । तस्यति । अतसत् । दस्यति । अदसत् ॥ वसु स्तम्भे । वस्यति । न शसददेति निषेधः । ववास । ववसतुः । वशादिरयमिति मते तु—वेसतुः । वेसुः ॥ व्युष विभागे । व्युष्यति ॥ विस प्रेरणे । विस्यति । अविसत् ॥ वुस उत्सर्गे ।

---

टिप्प०—१ अत्र श्लिषः इति आलिङ्गने इति च योगविभागः । श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र । योगविभागसामर्थ्याच्छलइगुपधादित्यस्याप्ययं नियमः । २ अत्र वदन्ति—यस इत्येवास्तु । ततः समो नियमार्थमिदम् सोपसर्गाद्यसश्चेत्संपूर्वकादेवेति । एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति ।

बुस्यति ॥ **मुस** खण्डने । मुस्यति ॥ **मसी** परिणामे । परिणामो विकारः ॥ **लुठ** विलोडने । लुठ्यति ॥ **उच** समवाये । उच्यति । उवोच । ऊचतुः । ऊचुः ॥ **भृशु भ्रंशु** अधःपतने । भृश्यति । बभर्श । अभृशत् । अनिदितामिति नलोपः । भ्रश्यति । बभ्रंश । अभ्रशत् ॥ **कृश** तनूकरणे । कृश्यति ॥ **ञितृषा** पिपासायाम् । तृष्यति ॥ **हृष** तुष्टौ । श्यन्नङौ भौवादिकाद्विशेषः । हृष्यति । अहृषत् । **रुष रिष** हिंसायाम् । तीषेति वेट् । रोषिता, रोष्टा । रेषिता, रेष्टा ॥ **कुप** क्रोधे । कुप्यति ॥ **गुप** व्याकुलत्वे ॥ **लुभ** गार्ध्ये । गार्ध्यमाकाङ्क्षा । लोभिता, लोब्धा । लोभिष्यति । भ्वादेरवृत्कृतत्वाल्लोभतीत्यप्याहुः ॥ **क्षुभ** संचलने । क्षुभ्यति ॥ **क्लिदू** आर्द्रीभावे । क्लिद्यति । चिक्लेदिथ, चिक्लेत्थ । चिक्लिदिव, चिक्लिद्व । चिक्लिदिम, चिक्लिद्म ॥ **ञिमिदा** स्नेहने ॥ **मिदेर्गुणः** ।७।३।८२। इक इत्संज्ञकशकारादौ प्रत्यये । मेद्यति । अमिदत् ॥ **ञिक्ष्विदा** स्नेहनमोचनयोः । क्ष्विद्यति ॥ **ऋधु** वृद्धौ । ऋध्यति । आनर्ध ॥ **गृधु** अभिकाङ्क्षायाम् । गृध्यति । अगृधत् ॥ **षूङ्** प्राणिप्रसवे । सूयते । सुषुवे । क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता, सविता ॥ **दूङ्** परितापे ॥ **दीङ्** क्षये ॥ **दीङो युडचि क्ङिति** ।६।४।६३। दीङः पर-स्याजादे:[1] क्ङित आर्धधातुकस्य युट् । (वुग्युटावुवङ्यणोः[2] सिद्धौ वक्तव्यौ) । दिदीये ॥ **मीनातिमिनोतिदीङां ल्यपि च** ।६।१।५०। एषामात्वं ल्यपि चादशि-त्येजूनिमित्ते । दाता । दास्यते । अदास्त ॥ **डीङ्** विहायसा गतौ । डीयते ॥ **पीङ्** पाने । पीयते ॥ **माङ्** माने । मायते । ममे । माता ॥ **जनी** प्रादुर्भावे ॥ **ज्ञाजनोर्जा** ।७।३।७९। शिति । जायते । गमहनजनेति उपधाया लोपः । 'स्तोः श्चुना श्चुः' । जज्ञे । जनिता । जनिष्यते ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** ।३।१।६१। एभ्यश्च्लेश्चिण्वा एकवचने तशब्दे परे ॥ **चिणो लुक्** ।६।४।१०४। चिणः परस्य तशब्दस्य लुक् ॥ **जनिवध्योश्च** ।७।३।३५। न वृद्धि-

---

टिप्प०–१ अजादेरिति । ङःसीत्यत्र उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति सप्तम्याश्च षष्ठीकल्पनम् । २ आभीयत्वेनासिद्धत्वमाशङ्क्याह—वुग्युटाविति ।

ञ्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट ॥ **दीपी** दीप्तौ । दीप्यते । दिदीपे । अदीपि । अदीपिष्ट ॥ **पद** गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ॥ **चिण् ते पदः** ।३।१।६०। अपादि । अपत्साताम् । अपत्सत ॥ **विद** सत्तायाम् । विद्यते । वेत्ता ॥ **बुध** अवगमने । बुध्यते । बोद्धा । एकाचो वशो भष्झषन्तस्येति भष्भावः ॥ भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् ॥ **युध** संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध ॥ **सृज** विसर्गे । सृज्यते । ससृजे । सृजिदृशोर्झल्यमकितीत्यमागमः । स्रष्टा । स्रक्ष्यते । सृक्षीष्ट । लिङ्सिचाविति कित्त्वम् । असृष्ट । असृक्षाताम् ॥ **मीङ्** हिंसायाम् । मीयते ॥ **रीङ्** श्रवणे । रीयते ॥ **लीङ्** श्लेषणे । लीयते ॥ **विभाषा लीयतेः** ।६।१।५१। लीयतेरिति [२]यका निर्देशो नतु श्यना । लीलीङोरात्वं स्यादेज्विषये ल्यपि च । लेता । लाता । लेष्यते । लास्यते । एज्विषये किम् ? लीयते । लिल्ये ॥ **व्रीङ्** वृणोत्यर्थे, व्रीयते । विव्रिये ॥ **मृष** तितिक्षायाम् । मृष्यति । मृष्यते । ममर्षिथ । ममृषे । ममृषिषे । मर्षितासि । मर्षितासे ॥ **णह** बन्धने । नह्यते । ननाह । नहो धः इति धः । ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत् । अनद्ध ॥ **रञ्ज** रागे । रज्यति । रज्यते ॥ **शप** आक्रोशे । शप्यति । शप्यते । शकविभाषितो मर्षणे । विभाषित इत्युभयपदीत्यर्थः । शक्यति, शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । पुषादित्वादङ् । अशकत् । अशक्त । सेट्कोयऽमित्येके । तन्मते नानिट्केषु लृदित्पठितः । शकिता । शकिष्यति । शकिष्यते । **इति दिवादिः** ॥

## अथ स्वादिगणः ॥ ५ ॥

**षुञ्** [३]अभिषवे ॥ **स्वादिभ्यः श्नुः** ।३।१।७३। कर्तरि सार्वधातुके । शपोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । लोपश्चास्येति प्रत्ययेऽतो लोपः । सुन्वः, सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुनुषे । सुषाव ।

---

टिप्प०—१ घञि ञिति कृत्युदाहरणं जनः । णिति कृति तु जनकः । २ सार्वधातुके यगिति विहितेन नतु श्यनेति । अन्यथा लीङ् इत्येव ब्रूयादिति भावः । ३ अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं च । तत्र स्नानेऽकर्मकः ।

सुषुवे । सोता । सुनवानि[1] । सुनवै । सुनुयात् ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु** ।७।२।७२। सिच इट् । असावीत् । असोष्ट । अभिषुणोति । अभ्यषुणोत् ॥ **सुनोतेः स्यसनोः** ।८।३।११७। सस्य षो न । विसोष्यति ॥ **षिञ्** बन्धने । विसिनोति ॥ **चिञ्** चयने[2] । चिनोति । चिनुते ॥ **विभाषा चेः** ।७।३।५८। अभ्यासाच्चेः कुत्वं वा सनि लिटि च । चिकाय, चिचाय । चिक्ये, चिच्ये । अचैषीत् । अचेष्ट ॥ **स्तृञ्** आच्छादने । स्तृणोति । स्तृणुते । तस्तार । तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥ **ऋतश्च संयोगादेः** ।७।२।४३। ऋदन्तात्संयोगादेर्लिङ्सिचोरिड्वा तङि । स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट, अस्तृत ॥ **धूञ्** कम्पने । धुनोति । धुनुते । दुधाव । दुधुवे । अधौषीत् । अधोष्यत् ॥ **धुञ्** कम्पने । धुनोति । धुनुते । स्वरतीति वेट् । दुधविथ । दुधोथ । किति लिटि तु ॥ **श्र्युकः किति** ।७।२।११। श्रिञ एकाच उगन्ताच्च गित्कितोरिण्न । इति प्राप्ते । क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुविम । अधावीत् । अधविष्ट । अधोष्ट ॥ **कृञ्** हिंसायाम् । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत ॥ **वृञ्** वरणे । वृणोति । वृणुते ॥ **बभूथाततन्थजगृम्भववर्थेति निगमे**[3] ।७।२।६४। एषां वेदे इडभावो निपात्यते । तेन भाषायां थलीट् । ववरिथ । ववृव । ववृवहे । वृतो वा । वरिता । वरीता ॥ **लिङ्सिचोरात्मनेपदेषु** ।७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा तङि ॥ **न लिङि** ।७।२।३९। वॄतो लिङ इटो न दीर्घः । वरिषीष्ट, वृषीष्ट । अवारीत् । अवरिष्ट । अवृत ॥ **टुदु** उपतापे । दुनोति ॥ **हि** गतौ वृद्धौ च । **हिनुमीना** ।८।४।१५। उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः । प्रहिणोति ॥ **हेरचङि**[4] ।७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं नतु चङि ।

---

टिप्प०–१ आडुत्तमस्येत्यादि कृते हुश्नुवोरिति यणं बाधित्वा परत्वाद्गुणः । २ चयनं रचनाविशेषः । ३ भूधातोस्तनोतेश्च थलि इडभावो निपात्यते वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम् । ४ इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति ण्यधिकस्यापि कुत्वं भवतीति । तेन जिघापयिषतीत्यादि सिद्धम् ।

जिघाय ॥ आप्लृ व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप्नुहि । लृदित्त्वादङ् । आपत् ॥ शक्लृ शक्तौ । अशकत् ॥ राध साध संसिद्धौ । राध्नोति ॥ **राधो हिंसायाम्** ।६।४।१२३। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । अपरेधुः । रेधिथ । राद्धा । साध्नोति । ससाध । साद्धा । असात्सीत् । असाद्धाम् ॥ ञिधृषा प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता ॥ दम्भु दम्भने । अनिदितामिति नलोपः । दभ्नोति । ददम्भ । (श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा) कित्त्वपक्षे नलोपः । तस्याभीयत्वादसिद्धत्वेनैत्वाभ्यासलोपयोरप्राप्तौ । (दम्भेश्च) एत्वाभ्यासलोपौ वक्तव्यौ । देभतुः । ददम्भतुः । दम्भिता । दभ्यात् ॥ तृप प्रीणने ॥ **क्षुभ्नादिषु च** ।८।४।३९। न णत्वम् । तृप्नोति । ततर्प ॥ अशू व्याप्तौ संघाते च । अश्नुते ॥ **अश्नोतेश्च**[२] ।७।४।७२। दीर्घादभ्यासादवर्णात्परस्य नुट् । आनशे । अशिता, अष्टा । अशिष्यते, अक्ष्यते । अश्नुवीत । अक्षीष्ट, अशिषीष्ट । आशिष्ट, आष्ट । आक्षाताम् ॥ इति स्वादिः ॥

## अथ तुदादिगणः ॥ ६ ॥

तुद व्यथने ॥ **तुदादिभ्यः शः** ।३।१।७७। शपोऽपवादः । तुदति । तुदते । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त ॥ णुद प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता ॥ भ्रस्ज पाके । ग्रहिज्यावयीति संप्रसारणम् । सस्य श्चुत्वम् । शस्य जश्त्वेन जः । भृज्जते ॥ **भ्रस्जो रोपधयो रमन्यतरस्याम्** ।६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वाऽऽर्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्जे, बभ्रज्जे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट ॥

---

टिप्प०–१ लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः । २ अश्नोतेश्चेत्यत्र श्नुविकरणनिर्देशः क्र्यादेः अश भोजन इत्यस्य मा भूदित्येतदर्थः । ३ परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श इत्येके । अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये ।

कृष विलेखने। कृषति। कृषते। चकर्ष। चकृषे। क्रष्टा, कर्ष्टा। कृक्षीष्ट। अक्राक्षीत्। अकार्क्षीत्। अकृक्षत्। अकृष्ट। अकृक्षाताम्। अकृक्षत। स्पृशमृशेति सिज् वा। अकृक्षाताम्। अकृक्षन्त॥ मिल संगमने। मिलति। मिलते। मिमेल। मेलिता। अमेलीत्॥ मुच्लृ मोक्षणे॥ शे मुचादीनाम् ।७।१।५९। मुचलुपविदलिपसिच्-कृत्खिद्पिशां नुम्। मुञ्चति। मुञ्चते। मोक्ता। मुच्यात्। लिङ्सिचाविति कित्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्॥ लुप्लृ छेदने। लुम्पति। लुम्पते। लोप्ता। अलुपत्। अलुप्त॥ विद्लृ लाभे। विन्दति। विन्दते। विवेद। व्याघ्रभूत्यादिमते सेट्। वेदिता। भाष्यादिमतेऽनिट्। परिवेत्ता॥ षिच क्षरणे। सिञ्चति। सिञ्चते। असिचत्। असिचत। असिक्त॥ लिप उपदेहे। लिम्पति। लिम्पते। लेप्ता। लिपिसिचिह्वश्चेत्यङ्[1]। अलिपत्। अलिप्त॥ कृती छेदने। कृन्तति। चकर्त। कर्तिता। सेसिचीति वेट्। कर्तिष्यति। कर्त्स्यति। अकर्तीत्॥ खिद[2] परिघाते। खिन्दति। चिखेद। खेत्ता॥ पिश अवयवे। पिंशति। पेशिता॥ ओव्रश्चू छेदने। वृश्चति। वव्रश्च[3]। वव्रश्चिथ, वव्रष्ठ। व्रश्चिता, व्रष्टा। व्रश्चिष्यति, व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्[4], अव्राक्षीत्[5]॥ व्यच व्याजीकरणे। विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्। अव्यचीत्। व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते। अनसीति पर्युदासेन कृन्मात्रविषयत्वात्। उछि उञ्छे। उञ्छः कणश आदानं, कणिशाद्यर्जनं शिलमिति यादवः। उञ्छति। उञ्छांचकार॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु। ऋच्छत्यृतामिति गुणः। द्विह-ल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्च्छ[6]। आनर्च्छतुः। ऋच्छिता॥ उज्झ उत्सर्गे। उज्झति। उज्झांचकार॥ लुभ विमोहने। लुभति। तीषसहलुभेति

---

टिप्प०-१ इह लिपिसिचिह्वश्चेति च्लेरङ् विधीयते, स चाप्राप्तविधिः। इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाभावः। २ अयं दैन्ये दिवादौ रुधादौ च पठितः। ३ वव्रश्चेत्यत्र लिट्यभ्यासस्येति संप्रसारणम्। उरदित्यत्वं रपरत्वं च। तस्माचः परस्मिन्निति स्थानिवद्भावान्न संप्रसारणे इति निषेधाद्वस्य न संप्रसारणम्। ४ ऊदित्त्वात्पक्षे इट्। ५ स्कोरिति सलोपः। व्रश्चेति षः। षढोरिति कः। ततः सस्य षत्वम्। ६ अनृच्छ इति पर्युदासान्नाम्।

वेट् । लोभिता, लोब्धा । लोभिष्यति ॥ **तृप तृम्फ** तृप्तौ । तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । (शे तृम्फादीनां नुम्वाच्यः) । आदिशब्दः प्रकारे[१] । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् ॥ **मृड** सुखने । **पृड** च । मृडति । पृडति ॥ **शुन** गतौ । शुनति ॥ **इष** इच्छायाम् । इषुगमीति छः । इच्छति । तीषेति वेट् । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् ॥ **कुट** कौटिल्ये । गाङ्कुटादीति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता ॥ **पुट** संश्लेषणे । पुटति । पुटिता ॥ **स्फुट** विकसने स्फुटति ॥ **स्फुर स्फुल** संचलने । स्फुरति । स्फुलति ॥ **स्फुरतिस्फुलत्योर्निर्निविभ्यः** ।८।३।७६। षत्वं वा । निःस्फुरति । निःष्फुरतीत्यादि ॥ **णू** स्तवने । परिणूतगुणोदयः[२] । नुवति । नुनाव । नुविता । इति कुटादयः ॥ **टुमस्जो** शुद्धौ । मज्जति । ममज्ज । मस्जिनशोरिति नुम् । (मस्जेरन्त्यात्पूर्वो नुम्वाच्यः) । संयोगादिलोपः । ममङ्क्थ, ममज्जिथ, मङ्क्ता । मङ्क्ष्यति ॥ **रुजो** भङ्गे । अरौक्षीत् ॥ **भुजो** कौटिल्ये । रुजिवत् ॥ **विश** प्रवेशने । विशति ॥ **मृश** आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत् । अमार्क्षीत्, अमृक्षत् । स्पृशमृशेति च्लेः सिच् ॥ **षद्लृ** विशरणगत्यवसादनेषु । विशरणं दुःखम् । सीदतीत्यादि[३] ॥ **शद्लृ** शातने ॥ **शदेः शितः** ।१।३।६०। शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् ॥ **कॄ** विक्षेपे ॥ **ॠत इद्धातोः** ।७।१।१००। किरति । (ईत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन)[४] । चकार । चकरतुः । करिता, करीता । कीर्यात् । अकारीत् ॥ **किरतौ लवने** ।६।१।१४०। उपात्किरतेः सुट् छेदेऽर्थे[५] । उपस्किरति । (अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्) । उपास्किरत् । उपचस्कार ॥ **हिंसायां प्रतेश्च** ।६।१।१४१। उपा-

---

टिप्प०—१ प्रकारो भेदसादृश्ये इत्यमरात्सादृश्य इत्यर्थः । २ श्युकः कितीतीण्निषेधः । ३ पाघ्राध्मास्थेति सीदादेशः । ४ परत्वाद्गुणवृद्धी भवत इति वक्तव्ये कुतोऽस्यारम्भ इत्यत्राहुः । परादप्यन्तरङ्गं बलवदितीत्वे प्राप्ते वार्तिकमिदमारब्धम् । ५ उपात्प्रतियत्ने इति सूत्रादुपादित्यनुवर्तते । लवने किम्? उपकिरति । ६ चादुपात् । 'उरोविदारं प्रतिचस्करे नखैः' इति माघः । कर्मणि लिट् ।

स्प्रतेश्च किरतेः सुट् हिंसायाम् । उपस्किरति । प्रतिस्किरति ॥ गॄ निगरणे ॥ अचि विभाषा ।८।२।२१। गिरते रेफस्य लोऽजादौ प्रत्यये । गिरति, गिलति । गरिता, गरीता । गलिता, गलीता ॥ प्रच्छ ज्ञीप्सायाम् । ग्रहिज्येति संप्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । मृङ् प्राणत्यागे ॥ म्रियतेर्लुङ्लिङोश्च ।१।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्त्वं स्वरार्थम् । रिङ् । इयङ् । म्रियते । ममार । ममर्थ । मम्रिव । मम्रिम । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ॥ पृङ् व्यायामे । प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापरिष्यते । ह्रस्वादङ्गादिति सिज्लोपः । व्यापृत । व्यापृषाताम् ॥ जुषी प्रीतिसेवनयोः । जुषते । जुजुषे । ओविजी भयसंचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते ॥ विज इट् ।१।१।२। विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते ॥ ओलजी ओलस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ॥ इति तुदादिः ॥

## अथ रुधादिगणः ॥ ७ ॥

रुधिर् आवरणे ॥ रुधादिभ्यः श्नम् ।३।१।७८। शपोऽपवादः । रुणद्धि । श्नसोरल्लोपः । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्द्धः । रुन्द्धः । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्त्से । रुन्धाथे । रुन्द्धे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध । रुरुधे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्द्धात् । रुन्द्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्द्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत् २ । अरुन्द्धाम् । अरुन्धन् । दश्चेति रुः । अरुणः । अरुणत् २ । अरुन्द्धम् । अरुन्द्ध । अरुन्द्ध । अरुन्धाताम् । अरुन्धत । रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत् । अरौत्सीत् । अरोत्स्यत् । अरोत्स्यत ॥ भिदिर् विदारणे ॥ छिदिर् द्वैधीकरणे ॥ युजिर् योगे ॥ रिचिर् विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रेक्ता । अरि-

---

टिप्प०-१ सिपि दश्चेति रुर्वा । एवमभिन इत्यत्रापि ।

णक् । अरिचत् । अरैक्षीत् । अरिक्त ॥ **विचिर्** पृथग्भावे । विनक्ति । विङ्क्ते ॥ **क्षुदिर्** संपेषणे । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत् । अक्षुत्त ॥ **उच्छृदिर्** दीप्तिदेवनयोः । छृणत्ति, छृन्ते । चच्छर्द । सेसिचीति वेट् । चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत्, अच्छर्दीत् । अच्छर्दिष्ट ॥ **उतृदिर्** हिंसानादरयोः । तृणत्ति, तृन्ते ॥ **कृती** वेष्टने । कृणत्ति ॥ **तृह हिसि** हिंसायाम् ॥ **तृणह इम्** ।७।३।९२। तृहः श्नमि कृते इम् हलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥ **श्नान्नलोपः** ।६।४।२३। हिनस्ति । जिहिंस । हिंसिता ॥ **उन्दी** क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दांचकार । औनत् । औन्ताम् । औन्दन् । औनः, औनत् । औनदम् ॥ **अञ्जू** व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ, अञ्जिता, अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ॥ **अञ्जेः सिचि** ।७।२।७१। अञ्जेः सिचो नित्यमिट् । आञ्जीत् ॥ **तञ्चू** संकोचने । तनक्ति । तङ्क्ता । तञ्चिता ॥ **ओविजी** भयसंचलनयोः । विनक्ति । विङ्क्तः । विज इडिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ॥ **शिष्लृ** विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ढि, शिण्ड्ढि शिनषाणि । शिंष्यात् । शिष्यात् । अशिषत् । अशेक्ष्यत् ॥ एवं **पिष्लृ** संचूर्णने ॥ **भञ्जो** आमर्दने । भनक्ति । बभञ्जिथ, बभङ्क्थ । भङ्क्ता ॥ **भुज** पालनाऽभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥ **भुजोऽनवने** ।१।३।६६। तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम्? महीं भुनक्ति ॥ **ञिइन्धी** दीप्तौ । इन्धे । इन्धाते । इन्धते । इन्त्से । इन्धांचक्रे । इन्धिता । इन्धताम् । इन्धाम् । इन्धताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धत । ऐन्धाः ॥ **विद** विचारणे । विन्ते । वेत्ता ॥ **इति रुधादिः** ॥

---

**टिप्प०**–१ उकारः क्त्वायामिड्विकल्पार्थः । २ श्नमः परस्य नस्य लोपः स्यात् । ३ विभाषाग्रहणं नानुवर्तत इति भावः । ४ अनवने अवनं पालनं, तद्भिन्ने इत्यर्थः ।

## अथ तनादिगणः ॥ ८ ॥

तनु विस्तारे ॥ **तनादिकृञ्भ्य उः ।३।१।७९।** तनोति । तनुते । ततान । तेने । तनिता । तनिष्यति । तनिष्यते । तनोतु । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत्, अतानीत् । **तनादिभ्यस्तथासोः ।२।४।७९।** तनादेः सिचो वा लुक् तथासोः[1] । अनुदात्तोपदेशेति नलोपः । तङि–अतत । अतनिष्ट[2] । अतथाः, अतनिष्ठाः । अतनिष्यत् । अतनिष्यत ॥ **षणु** दाने । सनोति । सनुते । ये विभाषेति आत्वम् । सायात् । सन्यात् ॥ **जनसनखनां सञ्झलोः ।६।४।४२।** एषामाकारो झलादौ सनि झलादौ क्ङिति च । असात । असनिष्ट । असाथाः, असनिष्ठाः ॥ **क्षणु** हिंसायाम् । क्षणोति । क्षणुते । ह्यन्तेति न वृद्धिः । अक्षणीत् । अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः ॥ **क्षिणु** च । उप्रत्यये लघूपधगुणो वा । क्षिणोति । क्षेणोति । क्षेणितासि । अक्षेणीत् । अक्षित । अक्षेणिष्ट ॥ **तृणु** अदने । तृणोति, तर्णोति । तृणुते, तर्णुते ॥ **डुकृञ्** करणे ॥ करोति । अत उत्सार्वधातुके कुरुतः । हलि चेति दीर्घे प्राप्ते ॥ **न भकुर्छुराम् ।८।२।७९।** भस्य कुर्छुरोरुपधाया न दीर्घः । कुर्वन्ति ॥ **नित्यं करोतेः ।६।४।१०८।** करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः । कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ । चकृव । चक्रे । कर्ता । करिष्यति । करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत ॥ **ये च ।६।४।१०९।** कृञ उलोपो यादौ प्रत्यये । कुर्यात् । कुर्वीत । आशिषि–क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । अकरिष्यत् । अकरिष्यत । **संपरिभ्यां करोतौ भूषणे ।६।१।१३७। समवाये च ।६।१।१३८।** आभ्यां परस्य करोतेः सुट् भूषणे संघाते चार्थे । संस्करोति, अलंकरोतीत्यर्थः । संस्कुर्वन्ति, संघीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट्; संस्कृतं भक्षा इति ज्ञापकात् ॥ **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ।६।१।१३९।** कृञः सुट् । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहारः आकाङ्क्ष-

---

टिप्प०–१ थासा साहचर्यादेकवचनं तशब्दो गृह्यते, तेनेह न, यूयमतनिष्ट । २ लुगभावपक्षे इट् ।

कदेशपूरणम् । उपस्कृता[1] कन्या । उपस्कृता[2] ब्राह्मणाः । एधो दकस्योपस्कुरुते[3] । उपस्कृतं भुङ्क्ते[4] । उपस्कृतं ब्रूते[5] ॥ **वनु** याचने । वनुते । ववने ॥ **मनु** अवबोधने । मनुते । मेने । मनिता । अमनुत । मन्वीत । मनिषीष्ट ॥ **इति तनादि** ॥

## अथ क्र्यादिगणः ॥ ९ ॥

**डुक्रीञ्** द्रव्यविनिमये ॥ **क्र्यादिभ्यः श्ना** ।३।१।८१। शपोऽपवादः । क्रीणाति । 'ई हल्यघोः' । क्रीणीतः । 'श्नाभ्यस्तयोरातः' । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ । चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति । क्रेष्यते । क्रीणातु । क्रीणीतात् । क्रीणीताम्, क्रीणाताम् । क्रीणताम् । क्रीणीयात् । क्रीणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत ॥ **प्रीञ्** तर्पणे कान्तौ च । प्रीणाति । प्रीणीते ॥ **श्रीञ्** पाके । श्रीणाति । श्रीणीते ॥ **मीञ्** हिंसायाम् । प्रमीणाति । 'हिनुमीना' इति णत्वम् । प्रमीणीते । मीनातीत्यात्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ॥ **षिञ्** वन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता ॥ **स्कुञ्** आप्रवणे[6] ॥ **स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च** ।३।१।८२। चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । स्तम्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्थाः परस्मैपदिनः ॥ **हलः श्नः शानज्झौ** ।३।१।८३। स्तभान[7] ॥ **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** ।३।१।५८। च्लेरङ् वा । व्यष्टभत् । अस्तम्भीत् ॥ **युञ्** वन्धने । युनाति । युनीते । योता । **क्नूञ्** शब्दे । क्नूनाति । क्नूनीते । क्नविता ॥ **द्रूञ्** हिंसायाम् । द्रूणाति । द्रूणीते ॥ **पूञ्** पवने ॥ **प्वादीनां ह्रस्वः**

---

टिप्प०–१ अलंकृतेत्यर्थः । २ समुदिता इत्यर्थः । ३ गुणाधानं करोतीत्यर्थः । ४ विकृतमित्यर्थः । ५ वाक्याध्याहारेण ब्रुते इत्यर्थः । ६ आप्रवणं उत्प्लवनमुद्धरणं च । ७ अतो हेरित्यारम्भसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् ।

।७।३।८०। पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ऋ गॄ ज्या री ली क्ली प्ली एषां चतुर्विंशतेर्ह्रस्वः शिति । पुनाति । पुनीते । पविता ॥ लूञ् छेदने । लुनाति । लुनीते । स्तॄञ् आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । तस्तरे । स्तरिता, स्तरीता । स्तृणीयात् । स्तृणीत । 'ऋत इद्धातोः' । आशिषि—स्तीर्यात् । स्तरिषीष्ट, स्तीर्षीष्ट ॥ 'सिचि च परस्मैपदेषु' । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरिष्ट, अस्तरीष्ट, अस्तीर्ष्ट ॥ कॄञ् हिंसायाम् । कृणाति । कृणीते । चकार । चकरे ॥ वॄञ् वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता । उदोष्ठ्येत्युत्वम् । वूर्यात् । वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट ॥ धूञ् कम्पने । धुनाति । धुनीते । दुधविथ, दुधोथ । दुधुविव । धोता, धविता । 'स्तुसुधूञ्भ्यः परस्मैपदेषु' । अधावीत् । अधविष्ट, अधोष्ट ॥ ग्रह उपादाने । गृह्णाति । गृह्णीते । जग्राह । जगृहे ॥ **ग्रहोऽलिटि दीर्घः** ।७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । गृहाण । गृह्यात् । ग्रहीषीष्ट । ह्यन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीषाताम् ॥ कुष निष्कर्षे । कुष्णाति । कोषिता ॥ **निरः कुषः** ।७।२।४६। वलादेरार्धधातुकस्येड्वा । निष्कोषिता । निष्कोष्टा, निष्कोष्टा । निरकोषीत् । 'शल इगुपधादिति क्सः' । निरकुक्षत् ॥ अश भोजने । अश्नाति । आश । अशिता । अश्नातु । अशान ॥ ज्ञा अवबोधने । ज्ञाजनोरिति जादेशः । जानाति । जज्ञौ ॥ पॄ पालनपूरणयोः । पृणाति । शॄ हिंसायाम् । शृणाति । शॄदॄप्रां ह्रस्वो वेति पक्षे यण् । शश्रतुः । शशरतुः ॥ दॄ विदारणे । दृणाति । दद्रतुः । ददरतुः ॥ जॄ वयोहानौ । जृणाति ॥ मुष स्तेये । मुष्णाति । मोषिता ॥ पुष पुष्टौ । पुष्णाति । पोषिता । बन्ध बन्धने । बध्नाति । बबन्ध । बबन्धिथ ॥ बन्धा । भन्त्स्यति । अभान्त्सीत् । अबान्धाम् । अभान्त्सुः ॥ क्लिशू विबाधने । क्लिश्नाति । क्लेशिता, क्लेष्टा । अक्लेशीत्, अक्लिक्षत् ॥ वृङ् संभक्तौ । वृणीते । वव्रे । ववृढ्वे । वरिता, वरीता । अवरिष्ट, अवरीष्ट । अवृत ॥ **इति क्र्यादिः** ॥

---

टिप्प०–१ दन्तोष्ठ्योऽपि ओष्ठ्यग्रहणेन गृह्यत इत्याह—वूर्यादिति ।

## अथ चुरादिगणः ॥ १० ॥

**चुर स्तेये ॥ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण-चुरादिभ्यो णिच्**[1] ।३।१।२५। स्वार्थे । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम्, तिप्शवादि । गुणायादेशौ । चोरयति ॥ **णिचश्च** ।१।३।७४। णिजन्तादात्मनेपदं कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः, द्वित्वम् । हलादिः शेषः । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत् ॥ **चिति स्मृत्याम्** । चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यादित्यादौ नलोपो न । चिन्तति । चिन्तेदित्यादि ॥ **यत्रि संकोचे** । यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्[2] । एवं **कुद्रि अनृतभाषणे** ॥ **तत्रि कुटुम्बधारणे** ॥ **मत्रि गुप्तपरिभाषणे** । तन्त्रयते । मन्त्रयते । एतौ आत्मनेपदिनौ ॥ **स्फुडि परिहासे** । स्फुण्डयति ॥ **पीड अवगाहने** ॥ **भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** ।७।४।३। एषामुपधाया ह्रस्वो वा चङ्परे णौ । अपीपिडत् । अपिपीडत् ॥ **प्रथ प्रख्याने** । प्रथयति ॥ **अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्** ।७।४।९५। एषामभ्यासस्याकारश्चङ्परे णौ । इत्वापवादः । अपप्रथत् ॥ **पृथ प्रक्षेपे** । पर्थयति ॥ **उर्ऋत्**[3] ।७।४।७। उपधाया ऋवर्णस्य ऋद्वा चङ्परे णौ । ईरराराामपवादः । अपीपृथत्, अपपर्थत् ॥ **लुण्ठ स्तेये** । लुण्ठयति ।

---

टिप्प०–१ चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थ इति । करणे इत्यस्य तु नानुवृत्तिः विच्छिन्नत्वादिति भावः । २ यत्रितत्रिमन्त्र्यादिषु इकारो व्यर्थ एव, नतु ज्ञापनार्थः । तेषां संयोगान्तत्वात् यन्त्रतन्त्रमन्त्र इति नकारे पठितेऽपि अनिदितामिति लोपो न लभ्यते । नकारस्यानुपधात्वात् चिन्त्यादित्यत्र तु चिन्त स्मृत्यामिति नकारोपधपाठे नलोपः स्यादेवेति तद्वारणाय कृत इकारस्तु ज्ञापक इति भावः । ३ जिघ्रतेर्वेत्यतो वेत्यनुवर्तते । ४ ऋकारोपधे उपधायाश्चेत्यचीकृतदित्यादौ इर् प्राप्तः, अमीमृजदित्यत्र मृजेर्वृद्धिरित्यार् प्राप्तः, इतरेषां ऋदुपधानां गुणेनापीपृथदित्यादावर् प्राप्तः इति विवेकः ।

अलुलुण्ठत् ॥ तड आघाते । ताडयति । अतीतडत् ॥ **मडि** भूषायां हर्षे च । मण्डयति । अममण्डत् ॥ **भडि** कल्याणे । भण्डयति । अबभण्डत् ॥ **छर्द** वमने । छर्दयति । अचछर्दत् ॥ **चुद** संचोदने । चोदयति । अचूचुदत् ॥ **पाल** रक्षणे । पालयति । अपीपलत् ॥ **पूज** पूजायाम् । पूजयति । अपूपुजत् ॥ **कृत** संशब्दने ॥ **उपधायाश्च** ।७।१।१०१। धातोरुपधाभूतस्य ॠत इत् । रपरत्वम् । उपधायां चेति दीर्घः । कीर्तयति । अचीकृतत् । अचिकीर्तत् ॥ **म्लेच्छ** अव्यक्तायां वाचि । म्लेच्छयति । अमिम्लेच्छत् ॥ **ईड** स्तुतौ । ईडयति ॥ **पिडि** संघाते । पिण्डयति ॥ **रुष** रोषे । रोषयति । अरूरुषत् ॥ **तुल** उन्माने । तोलयति । अतूतुलत् ॥ **शुल्ब** माने । शुल्बयति । अशुशुल्बत् ॥ **घुषिर्** विशब्दने । घोषयति । अजूघुषत् ॥ **पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु** भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । एवं परेषाम् । घाटयति । घण्टयति ॥ **नाग्लोपिशास्वृदिताम्** ।७।४।२। णिच्यग्लोपिनः शास्तेॠदितां चोपधाया ह्रस्वो न चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । 'आ धृषाद्वा' । इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य ॥ **युज पृच** संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् ॥ **अर्च** पूजायाम् ॥ **षह** मर्षणे । साहयति । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' ॥ **वृञ्** आवरणे । वारयति । वरति ॥ व्ररते ॥ **जॄ** वयोहानौ । जारयति । जरति ॥ **शिष** असर्वोपयोगे । शेषयति । शेषति । शेष्टा । अशिक्षत् ॥ **तप** दाहे । तापयति । तपति । तप्ता ॥ **तृप** तृप्तौ । तर्पयति । तर्पति ॥ **हिसि** हिंसायाम् । हिंसयति । हिंसति ॥ **अर्ह** पूजायाम् ॥ **छद** अपवारणे । छादयति । छदति । छदते ॥ **धूञ्** कम्पने । (धूञ्प्रीञोर्नुक्)

टिप्प०–१ अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये–'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च । २ केचित्तु धून्प्रीणोरिति पठित्वा प्रीणातिसाहचर्याद्धुनोतेरेव नुकमाहुः । धावयति ।

णौ । धूनयति । धवति । धवते ॥ **प्रीञ् तर्पणे** । प्रीणयति । प्रीणयते । प्रीयति । प्रीयते ॥ **वच परिभाषणे** । वाचयति । वचति । वक्ता । अवाक्षीत् ॥ **मान पूजायाम्** । मानयति । मानति । मानिता ॥ **भू प्राप्तौ आत्मनेपदी** । भावयते, भवते । णिच्संनियोगेनैवात्मनेपदमित्येके । भवति ॥ **मार्ग अन्वेषणे** ॥ **धृष प्रसहने** । धर्षयति, धर्षति ॥ अथादन्ताः ॥ **कथ वाक्यप्रबन्धे** । अल्लोपः ॥ **अचः परस्मिन्पूर्वविधौ** ।१।१।५७। परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधाया वृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् ॥ **गण संख्याने** । गणयति ॥ **ई च गणः** ।७।४।९७। गणेरभ्यासस्य ईत्स्यात् चादच्चङ्परे णौ । अजीगणत्, अजगणत् ॥ **रच प्रतियत्ने** । रचयति । अररचत् ॥ **कल गतौ संख्याने च** । कलयति । अचकलत् ॥ **मह पूजायाम्** । महयति ॥ **सूच पैशुन्ये** । सूचयति । अषोपदेशत्वान्न षः । असूसुचत् ॥ **कुमार क्रीडायाम्** । कुमारयति । अचुकुमारत् ॥ **ऊन परिहाणे** । ऊनयति । ओः पुयण्जीति सूत्रे पयोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गम् । णिच्येच[1] आदेशो न द्वित्वे कार्ये इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते, तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदित्यादि सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वम् । तत उत्तरखण्डे अल्लोपः । औननत् ॥ **ध्वन शब्दने** । ध्वनयति । अदध्वनत् ॥ **सूत्र वेष्टने** । सूत्रयति ॥ **मूत्र प्रस्रवणे** । मूत्रयति । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । मूत्रति । आगर्वादात्मनेपदिनः ॥ **पद गतौ** । पदयते । अपपदत ॥ **गृह ग्रहणे** ॥ **मृग अन्वेषणे** । मृगयते ॥ **शूर वीर विक्रान्तौ** । शूरयते । वीरयते ॥ **गर्व माने** । गर्वयते ॥ इति चुरादयः ॥

---

टिप्प०–१ अत्स्मृदृत्वर इत्यत्र योऽत्स चकारेण समुच्चीयते । २ प्रतिषेधो मुख्य इत्यभिप्रेत्येदमुक्तम् । प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यम् ।

## अथ तिङन्ते णिच्प्रक्रिया ॥ १ ॥

स्वतन्त्रः[1] कर्ता ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ तत्प्रयोजको[2] हेतुश्च ।१।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च । हेतुमति[3] च ।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् । भवन्तं प्रेरयति भावयति ॥ ओः पुयण्ज्यपरे[4] ।७।४।८०। सनि परे यदङ्गं तदवयवो योऽभ्यासस्तस्योत इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः। अवीभवत्। अपीपवत् ॥ मूङ् बन्धने । अमीमवत् । अयीयवत् ॥ रु शब्दे । अरीरवत् । अलीलवत् । अजीजवत् । पुयण्जीति किम् ? नुनावयिषति । अपरे किम् ? बुभूषति ॥ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।७।४।८१। एषामभ्यासोकारस्येत्वं वा सनि अवर्णपरे धात्वक्षरे परे । असिस्रवत् इत्यादि । अवर्णपरे किम् ? अशूशुषत् । णिजन्ताण्णिच् । परत्वाद्वृद्धौ प्राप्तायाम् । ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति णिलोपः । चोरयति । णौ चङीति ह्रस्वः । दीर्घो लघोरिति दीर्घः । न चाग्लोपित्वाद्द्वयोरप्यसंभवः; ण्याकृतिनिर्देशात् । अचूचुरत् ॥ टुओश्वि गतिवृद्ध्योः ॥ णौ च संश्चङोः ।६।१।३१। सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् । (संप्रसारणं तदाश्रयं च कार्यं बलवत् इति वचनात्संप्रसारणम् ।) अशूशवत् । अलघुत्वान्न दीर्घः, अशिश्वयत् ॥ स्तम्भुसिवुसहां चङि ।८।३।११६। उपसर्गादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् ॥ स्वापेश्चङि ।६।१।१८। ण्यन्तस्य स्वापेश्चङि संप्रसारणम् । असूषुपत् ॥ हनस्तोऽचिण्णलोः ।७।३।३२। चिण्णल्वर्जे ञिति णिति । घातयति ॥ अर्ति-

---

टिप्प०-१ प्रधानीभूतधात्वर्थाश्रयः। तच्छब्देन स्वतन्त्रः कर्तेति पूर्वसूत्रोपात्तः कर्ता परामृश्यते तस्य कर्तुः प्रयोजकः प्रेरकः । तद्व्यापारानुकूलव्यापारवानित्यर्थः । चकारः संज्ञाधिकारबाधनार्थस्तदाह–हेतुसंज्ञः कर्तृसंज्ञश्चेति । ३ स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान्व्यापारः तस्मिन्वाच्ये णिच् । ४ पुयण्जीति समाहारद्वन्द्वात्सप्तम्येकवचनम् । अपर इति बहुव्रीहिः ।

**ह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** ।७।३।३६। स्थापयति ॥ **तिष्ठतेरित्** ।७।४।५। उपधायाश्चङ्परे णौ । अतिष्ठिपत् ॥ **जिघ्रतेर्वा** ।७।४।६। उपधाया इत्वं चङ्परे णौ । अजिघ्रपत् । अजिघ्रिपत् ॥ **शाच्छासाह्वाव्यावेपां युक्** ।७।३।३७। णौ । शाययति । अशीशयत् । ह्वाययति ॥ **ह्वः संप्रसारणम्** ।६।१।३२। सन्परे चङ्परे च णौ । (काण्यादीनां वा) चङ्परे णौ उपधाया ह्रस्वो वा । ण्यन्ताः कणरणभण-श्रणलुपहेठाः षट् भाष्ये । हायिवाणिलोटिलोचयश्चत्वारोऽधिका न्यासे । चाणिलोठी अप्यन्यत्र । इत्थं काण्यादयो द्वादश । अजूहवत्, अजुहावत् । पाययति ॥ **लोपः पिबतेरीच्चाभ्यासस्य** ।७।४।४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत्[1] । (पातेर्णौ लुग्वक्तव्यः) । पुकोऽपवादः ॥ **पाल रक्षणे** ॥ **वो विधूनने जुक्** ।७।३।३८। णौ । वाजयति । विधूनने किम्? केशान्वापयति ॥ **शदे-रगतौ तः** ।७।३।४२। णौ । शातयति । गतौ तु । गाः शादयति गोविन्दः । गम-यतीत्यर्थः ॥ **रुहः पोऽन्यतरस्याम्** ।७।३।४३। णौ । रोपयति, रोहयति ॥ **दोषो णौ** ।६।४।९०। दुष्यतेरुपधाया ऊत्स्याण्णौ । दूषयति ॥ **वा चित्तविरागे** ।६।४।९१। विरागोऽप्रीतता । चित्तं दूषयति-दोषयति वा कामः ॥ **उभौ साभ्या-सस्य** ।८।४।२१। साभ्यासस्यानितेरुभौ नकारौ[2] णेत्वं प्राप्नुतो निमित्ते सति । प्राणि-णत् ॥ **णौ गमिरबोधने** ।२।४।४६। इणः । गमयति । बोधने तु—प्रत्याययति ॥ **घट चेष्टायाम्** ॥ **घटादयो मितः** ॥ **'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ।'** मितः । **'ज्व-लह्वलह्मलनमामनुपसर्गाद्वा'** । एषां मित्त्वं वा ॥ **'ग्लास्नावनुवमां च'** । अनु-पसर्गादेषां मित्त्वं वा । **'न कम्यमिचमाम्'** । अमन्तत्वात्प्राप्तं मित्त्वमेषां न ॥ **'यमो-ऽपरिवेषणे'** । मित्त्वं न । **'स्खदिरवपरिभ्यां च'** । मिन्न ॥ **मितां ह्रस्वः** ।६।४।-

---

टिप्प०—१ उपधालोपस्य द्वित्वे कर्तव्ये प्रतिषेधात् कृते लोपे स्थानिवद्भावाद्वा पाय्शब्दस्य द्वित्वे हलादिःशेषे ईकारः । स च अनभ्यासविकार इति निषेधादन्त्यस्यादेशः । २ इह पूर्वं णत्वं कृत्वा पश्चात् द्वित्वे कृते प्राणिणदित्यादिरूपसिद्धावयमारम्भः 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वज्ञापनार्थः । तेन ऊर्णुनावेत्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वादभ्यासोत्तरखण्डे णत्वाभावः सिद्धः ॥

९२। ज्ञपादीनां घटादीनां च णावुपधाया ह्रस्वः। घटयति। अजीघटत्॥ ज्ञप ज्ञाने ज्ञापने च। ज्ञपयति। अजिज्ञपत्॥ **रभेरशब्लिटोः** ।७।१।६३। नुमचि॥ **लभेश्च**[1] ।७।१।६४। अरम्भत्। अलम्भत्। ईर्ष्ययति॥ **(ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्)** तृतीयव्यञ्जनस्य तृतीयैकाच इति वाऽर्थः। आद्ये षस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्तते[3]। ऐर्ष्यियत्। द्वितीयव्याख्यायां णिजन्ताच्चङि ष एवाभ्यासे श्रूयते। हलादिः शेषात्। द्वित्वं तु द्वितीयस्यैव; तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः। ऐर्षिष्यत्॥ इति णिजन्तप्रक्रिया॥

## अथ तिङन्ते सन्नन्तप्रक्रिया॥ २॥

**धातोः कर्मणः समानकर्तृकादिच्छायां वा**[4] ।३।१।७। इषिकर्मणो धातोरिषिणैककर्तृकात्सन्वेच्छायाम्॥ पठ व्यक्तायां वाचि। इट्॥ **सन्यङोः** ।६।१।९। सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। सन्यतः। पठितुमिच्छति पिपठिषति। कर्मणः किम्? गमनेनेच्छतीति करणान्मा भूत्। समानकर्तृकात् किम्। शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणाद्वाक्यमपि॥ शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥१॥ तेन पिपठिषितुमिच्छतीति वाक्यमेव। 'लुङ्सनोर्घस्लृ'॥ **सः स्यार्धधातुके** ।७।४।४९। सस्य तः स्यात्सादावार्धधातुके। अत्तुमिच्छति जिघत्सति। एकाच इति नेट्॥ **अज्झनगमां सनि** ।६।४।१६। अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि॥ **इको झल्** ।१।२।९। इगन्ताज्झलादिः सन्कित्। कर्तुमिच्छति चिकीर्षति। जिघांसति॥ **सनि च** ।२।४।४७। इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने तु प्रतीषिषति॥ **इङश्च** ।२।४।४८। गमिः सनि। अधिजिगांसते॥ **रुदविदमुषग्रहिस्वपिप्रच्छः संश्च** ।१।२।८। एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति॥ **सनि ग्रहगुहोश्च** ।७।२।१२।

---

टिप्प०—१ लभेश्चेत्यत्र योगविभाग आङो यीत्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति। २ तृतीयस्यैकाच इति पक्षे। ३ वचनसामर्थ्यादिति भावः। ४ इच्छायामिति श्रुतत्वात्कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्यत इति भावः।

[1]ग्रहेर्गुहेरुगन्ताच्च सन इण्न। जिघृक्षति॥ **हलन्ताच्च** ।१।२।१०। इक्समीपाद्धलः परो झलादिः सन्कित्॥ **गुहू संवरणे**। जुघुक्षति। सुघुप्सति॥ **किरश्च पञ्चभ्यः** ।७।२।७५। कृ गृ दृङ् धृङ् प्रच्छ एभ्यः सन इट्। पिपृच्छिषति। चिकरिषति। जिगरिषति, जिगलिषति। अत्रेटो दीर्घो नेष्टः॥ **पूर्ववत्सनः** ।१।३।६२। सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। दिदरिषते। दिधरिषते। बुभूषति॥ **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्** ।७।२।४९। इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा॥ **च्छ्वोः शूडनुनासिके च** ।६।४।१९। सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। यण्। द्वित्वम्। दुद्यूषति। दिदेविषति॥ **स्तौतिण्योरेव षण्यभ्यासात्** ।८।३।६१। अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः षभूते सनि नान्यत्र। तुष्टूषति। सिषाधयिषति। स्तौतिण्योः किम्? सुस्यूषति। सिसेविषति॥ **आप्ज्ञप्यृधामीत्** ।७।४।५५। एषामच ईत्स्यात्सादौ सनि॥ **अत्र लोपोऽभ्यासस्य** ।७।४।५८। सनिमीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः। आप्तुमिच्छति ईप्सति। अर्धितुमिच्छति ईर्त्सति। अर्दिधिषति, बिभ्रज्जिषति, बिभर्जिषति, बिभ्रक्षति, बिभर्क्षति॥ **दम्भ इच्च** ।७।४।५६। दम्भेरच इत्स्यादीच्च सादौ सनि। हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरम्। तेन सनः कित्त्वान्नलोपः। धिप्सति, धीप्सति। दिदम्भिषति। शिश्रीषति, शिश्रयिषति। उदोष्ठ्येत्युत्वम्। सुस्वूर्षति, सिस्वरिषति। युयूषति, यियविषति। 'विभाषोर्णोः' इति ङित्[2]। ऊर्णुनूषति, ऊर्णुनुविषति, ऊर्णुनविषति[3]। बुभूर्षति, बिभरिषति। जिज्ञपयिषति। ज्ञीप्सति। सिसनिषति। सिषासति॥ **(आशङ्कायां सन्वक्तव्यः)**। श्वा मुमूर्षति[4]॥ **(तनिपतिदरिद्रा-**

---

टिप्प०-१ अत्र ग्रहेर्नित्यं गुहेर्विकल्पेन प्राप्ते निषेधोऽयम्। २ केचित्तु षत्वे सति भष्भाव इत्यध्याहारेण योजयन्ति। तथा च जगृह स इति स्थिते इणः परत्वेन सस्य षत्वं प्राप्तं तस्यासिद्धत्वाड्ढत्वे भष्भावः। ततश्च कत्वे कवर्गात्परस्य षत्वमिति विधिक्रमः। ३ इडभावे अज्झनगमामिति दीर्घः। इट्पक्षे तु विभाषोर्णोः इति वा ङित्त्वम्। ४ एकश्वविषया मरणाशङ्केति बोधः। मरणाशङ्काविषयो भवतीत्यन्ये।

तिभ्यः सनो वेड् वाच्यः) । तितनिषति ॥ **तनोतेर्विभाषा** ।६।४।१७। उपधाया दीर्घो झलादौ सनि । तितांसति, तितंसति । कूलं पिपतिषति ॥ **सनि मीमाघुरभलभशकपतपदामच इस्** ।७।४।५४। सादौ सनि । अभ्यासलोपः । पित्सति । दिदरिद्रिषति, दिदरिद्रासति ॥ **मुचोऽकर्मकस्य गुणो वा** ।७।४।५७। सादौ सनि । अभ्यासलोपः । मोक्षते-मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम्? मुमुक्षति वत्सं कृष्णः ॥ **इट् सनि वा** ।७।२।४१। वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा । विवरिषति, विवरीषति । वुवूर्षते । विवरिषते । तितरिषति, तितरीषति, तितीर्षति ॥ **स्मिपूङ्रञ्ज्वशां सनि** ।७।२।७४। स्मिङ् पूङ् ऋ अञ्जु अशू एभ्यः सन इट् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते ॥ **गुप** गोपने ॥ **तिज** निशाने ॥ **कित** निवासे रोगापनयने च ॥ **मान** पूजायाम् ॥ **वध** बन्धने ॥ **दान** खण्डने ॥ **शान** तेजने ॥ **गुप्तिज्किद्भ्यः सन्** ।३।१।५। **मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य** ।३।१।६। सूत्रद्वयोक्तेभ्यः सन् मानादीनामभ्यासस्येकारस्य दीर्घश्च । (गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे, निग्रहे, अपनयने, नाशने, संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने) । गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवाऽनुदात्तेतः । दानशानौ च स्वरितेतौ । एष्वर्थेष्वेते नित्यं सन्नन्ताः । अर्थान्तरेषु त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्पदव्यवस्था । धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । तितिक्षते । चिकित्सति । मीमांसते । बीभत्सते । दीदांसति । दीदांसते । शीशांसति । शीशांसते । णिचि तु—गोपयति । गोपयते ॥ इति तिङन्ते सन्नन्तप्रक्रिया ॥

## अथ तिङन्ते यङन्तप्रक्रिया ॥ ३ ॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** ।३।१।२२। पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् ॥ **गुणो यङ्लुकोः** ।७।४।८२। अभ्यासस्य । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति—बोभूयते । बोभू-

टिप्प०—१ गोपनाद्यर्थकानां निन्दादौ वृत्तिस्तु धातूनामनेकार्थकत्वात् । २ केवले ह्यचरितं लिङ्गं समुदायोपकारकं भवति ।

यांचक्रे । अवोभूयिष्ट । धातोः किम्? आर्धधातुकत्वं यथा स्यात् । तेन ब्रुवो वचिरित्यादि । एकाचः किम्? पुनःपुनर्जागर्ति । हलादेः किम्? भृशमीक्षते ॥ **नित्यं कौटिल्ये गतौ** ।३।१।२३। गत्यर्थात्कौटिल्ये एव यङ् न तु क्रियासमभिहारे ॥ **दीर्घोऽकितः** ।७।४।८३। अकितोऽभ्यासस्य दीर्घो यङ्लुकोः । कुटिलं व्रजति–वाव्रज्यते ॥ **यस्य हलः** ।६।४।४९। हलः परस्य यस्य लोपः स्यादार्धधातुके । 'आदेः परस्य' । 'अतो लोपः' । वाव्रजांचक्रे । वाव्रजिता ॥ **रीङृतः** ।७।४।२७। अकृद्यकारे असार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः ॥ डुकृञ् करणे । चेक्रीयते ॥ **रीगृदुपधस्य च** ।७।४।९०। धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः । वरीवृत्यते । वरीवृतांचक्रे । वरीवृतिता । 'क्षुभ्नादिषु च' । नरीनृत्यते । जरीगृह्यते ॥ (**रीगृत्वत इति वाच्यम्**) । वरीवृश्च्यते ॥ **लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्** ।३।१।२४। एभ्यो धात्वर्थगर्हायामेव यङ् । गर्हितं लुम्पति–लोलुप्यते । सासद्यते ॥ **चरफलोश्च** ।७।४।८७। अनयोरभ्यासस्यातो नुक् यङ्यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते । स च पदान्तवद्वाच्यः । वा पदान्तस्येति यथा स्यात् ॥ **उत्परस्यातः** ।७।४।८८। चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । हलि चेति दीर्घः । चञ्चूर्यते, चंचूर्यते । पम्फुल्यते, पंफुल्यते ॥ **जपजभदहदशभञ्जपशां च** ।७।४।८६। एषामभ्यासस्य नुक् यङ्यङ्लुकोः । गर्हितं जपति–जञ्जप्यते । इत्यादि ॥ **ग्रो यङि** ।८।२।२०। गिरते रेफस्य लत्वं यङि । गर्हितं गिलति–जेगिल्यते ॥ (**सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः**) । सोसूच्यते ॥ अट पट गतौ । अटाट्यते ॥ **यङि च** ।७।४।३०। अर्तेः संयोगादेश्च ऋदन्ताङ्गस्य गुणो यङि । यकारपररेफस्य न द्वित्वनिषेधः । अरार्यते इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते ॥ **सिचो यङि** ।८।३।११२। सस्य षो न । निसेसिच्यते ॥ **न कव-**

---

टिप्प०–१ सूत्रे क्रियासमभिहार इत्युक्तत्वाद्धातोरेव स्यान्नतु प्रातिपदिकादिति पृच्छति–धातोः किमिति । २ रुदिति किम्? चेकीर्यते । णिजभावपक्षे एकाच्त्वाद्यङ् । ३ अत्राभ्याससकारस्य उपसर्गात्सुनोतीति, ततः परस्य तु स्थादिष्वभ्यासेन चेति षत्वे प्राप्ते निषेधोऽयम् ।

तेर्यङि ।७।४।६३। अभ्यासस्य चुत्वं न । कोकूयते । कौतिकुवत्योस्तु—चोकूयते ॥ (**हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः**) । जेघ्नीयते । हिंसायां किम्? **नुगतोऽनुनासिकान्तस्य** ।७।४।८५। अदन्ताभ्यासस्य नुक् यङ्लुकोः । जंघन्यते ॥ **अयङ् यि क्ङिति** ।७।४।२२। शीङः । शाशय्यते[1] ॥ **स्वपिस्यमिव्येञां यङि** ।६।१।१९। संप्रसारणम् । सोषुप्यते । सेसिम्यते[2] । वेवीयते ॥ **न वशः** ।६।१।२०। संप्रसारणम् । वावश्यते ॥ **चायः की** ।६।१।२१। चेकीयते ॥ **ई घ्राध्मोः** ।७।४।३१। जेघ्रीयते । देध्मीयते ॥ **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** ।७।४।८४। एषामभ्यासस्य नीगागमः यङ्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते, पनीपद्यते । चनीस्कद्यते ॥

॥ इति तिङन्ते यङन्तप्रक्रिया ॥

## अथ तिङन्ते यङ्लुगन्तप्रक्रिया ॥ ४ ॥

**यङोऽचि च** ।२।४।७४। यङोऽच् प्रत्यये लुक् स्यात् । चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । 'शेषात्कर्तरि परस्मैपदम्' । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥ **यङो वा** ।७।३।९४। यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात् । भूसुवोरिति निषेधो यङ्लुकि भाषायां न । 'बोभूतु-तेतिक्ते' इति छन्दसि निपातनात् । बोभवीति, बोभोति । बोभूतः । बोभुवति । बोभवीषि । बोभोषि । बोभूथः । बोभूथ । बोभवीमि, बोभोमि । बोभूवः । बोभूमः । बोभवांचकार । बोभवांबभूव । बोभवामास । बोभविता । बोभविष्यति । बोभवीतु । बोभोतु । बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङो

---

टिप्प०—१ परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम् । २ स्यमुशब्दे दन्त्याजन्तसादित्वाभावेनापोपदेशत्वान्न षः । ३ 'हलः' इति 'अकृत्सार्वधातुक-' इति वा दीर्घः ।

वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत्, अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् । जङ्गमीति, जङ्गन्ति । अनुदात्तेत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । 'म्वोश्च' । जङ्गन्वः ।

शितपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥

इति वचनान्न इण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि । 'मो नो धातोः' । अजङ्गमीत् । अनुबन्धनिर्देशान्न च्लेरङ् । अजङ्गमीत् ॥ **रुग्रिकौ च**[1] **लुकि** ।७।४।९१। ऋदुपधस्य धातोरभ्यासस्य रुक्[2] रिक् रीक् एते स्युर्यङ्लुकि ॥ **ऋतश्च** ।७।४।९२। ऋदन्त[3]धातोरपि तथा । वर्वृतीति, वरिवृतीति, वरीवृतीति । वर्वर्ति, वरिवर्ति, वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति न,—वर्वर्तिष्यति ३ । अवर्वृतीत् ३ । अवर्वर्त् ३ । सिपि दश्चेति रुत्वपक्षे रो रि । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न,—अवर्वर्तीत् ३ । चर्करीति, चरिकरीति, चरीकरीति । चर्कर्ति, चरिकर्ति, चरीकर्ति । चर्कृतः ३ । चर्क्रति ३ । चर्करांचकार ३ । चर्करिता ३ । अचर्करीत् ३ । अचर्कः ३ । चर्कृयात् ३ । आशिषि रिङ्, चर्क्रियात् ३ । अचर्कारीत् ३ । ऋतश्चेति तपरत्वान्नेह—चाकर्ति, चाकरीति । चाकीर्तः । चाकीर्हि । चाकराणि । अचाकरीत् । अचाकः । अचाकीर्ताम् । अचाकरुः । अचाकारीत् । अचाकारिष्टाम् । तातरीति । तातर्तीत्यादि ॥

॥ इति तिङन्ते यङ्लुगन्ताः ॥

## अथ तिङन्ते नामधातुप्रक्रिया ॥ ५ ॥

**सुप आत्मनः क्यच्** ।३।१।८। इषिकर्मण एषितुरात्मसंबन्धिनः सुबन्तादिच्छायामर्थे क्यज्वा ॥ **सुपो धातुप्रातिपदिकयोः** ।२।४।७१। एतयोरवयवस्य

---

टिप्प०—१ अत्र चकारेण 'रीगृदुपधस्य—' इत्यतो रीगनुकृष्यते । २ रुक उकार उच्चारणार्थः । ३ ऋताऽनुवर्तमानमङ्गं विशेष्यते । ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः । ऋदन्तधातोरिति पाठस्तु फलितार्थकथनपरतया नेयः ।

सुपो लुक् स्यात् ॥ **क्यचि च ।७।४।३३।** अवर्णस्य ईत् । आत्मनः पुत्रमिच्छति–पुत्रीयति ॥ **(मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच्न)** किमिच्छति । इदमिच्छति । स्वरिच्छति ॥ **अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ।७।४।३४।** एते क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् ? अशनीयति । उदकीयति । धनीयति ॥ **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ।७।१।५१।** एषां क्यच्यसुक् । **(अश्ववृषयोर्मैथुनेच्छायाम्)** । अश्वस्यति वडवा । वृषस्यति गौः ॥ **(क्षीरलवणयोर्लालसायाम्)** । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः ॥ **(सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ)** । दधिस्यति, दध्यस्यति ॥ **नः क्ये ।१।४।१५।** क्यचि क्यङि च नान्तमेव पदं नान्यत् । राजीयति । नान्तमेवेति किम् ? वाच्यति । 'हलि च' । गीर्यति । पूर्यति । धातोरित्येव । तेनेह न–दिवमिच्छति दिव्यति ॥ **क्यस्य विभाषा ।६।४।५०।** हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्धधातुके । 'आदेः परस्य' । 'अतो लोपः' । तस्य स्थानिवद्भावान्नोपधाया गुणः । समिधिता, समिध्यिता ॥ **काम्यच्च ।३।१।९।** उक्तविषये काम्यच् । पुत्रमात्मन इच्छति–पुत्रकाम्यति । पुत्रकाम्यिता ॥ **उपमानादाचारे ।३।१।१०।** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ **(सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः)** । 'अतो गुणे' । कृष्ण इवाचरति–कृष्णति । स्व इवाचरति स्वति । सस्वौ ॥ **अनुनासिकस्य क्विझलोः क्ङिति ।६।४।१५।** अनुनासिकान्तस्योपधाया दीर्घः क्वौ झलादौ च क्ङिति । इदमिवाचरति–इदामति । राजेवाचरति–राजानति । इन्हन्निति नियमान्नेहोपधाया दीर्घः । पन्था इवाचरति–पथीनति । मथीनति ॥ **कर्तुः क्यङ् सलोपश्च ।३।१।११।** उपमानात्कर्तुः सुबन्तादाचारेऽर्थे क्यङ् वा । सान्त-

---

टिप्प०–१ उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घत्वं चेत्यपि ज्ञेयम् । २ इह 'क्यचि च' इत्यवर्णस्येत्वे कर्तव्ये पूर्वत्रासिद्धमिति नलोपोऽसिद्धो न भवति; नलोपः सुप्स्वर इति नियमात् । ३ उच्चारणसामर्थ्यान्न कस्येत्संज्ञा । ४ आचारोऽत्र व्यवहारः । ५ धातोः कर्मण इति सूत्राद्वेत्यनुवर्तते तदाह–क्यङ् वेति ।

कर्तृवाचकस्य लोपो वा । क्यङ् वेत्युक्तेः पक्षे वाक्यम् ॥ **(संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः)** । इति क्यङ्सलोपयोः सहैव प्रवृत्तिः । लोपश्च व्यवस्थितः ॥ **(ओजसोऽप्सरसो नित्यमितरेषां विभाषया)** । कृष्ण इवाचरति कृष्णायते । (ओजायते[1] । अप्सरायते । यशायते, यशस्यते । विद्वायते, विद्वस्यते । **(आचारेऽवगल्भक्लीवहोडेभ्यः क्विब्वा वक्तव्यः)** । वाग्रहणाद्वाक्यमपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । तेन तङ्,—अवगल्भते । क्लीवते । होडते । भूतपूर्वादप्यनेकाच आम्; एतद्वार्तिकारम्भसामर्थ्यात् । अवगल्भांचक्रे । क्लीवांचक्रे । होडांचक्रे । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते । तेन गल्भशब्दात्प्रागट् । अवागल्भत । अवागल्भिष्ट ॥ **लोहितादिडाज्भ्यः क्यष्** ।३।१।१३। **वा क्यषः** ।१।३।९०। क्यषन्तात्परस्मैपदं वा । अलोहितो लोहितो भवति—लोहितायति, लोहितायते । ननूच्चारणसामर्थ्यात्काम्यच इव क्यषोऽपि ककारः कुतो न श्रूयते? तस्य भाष्ये प्रत्याख्यानात् । पटपटायति । पटपटायते ॥ **कष्टाय[2] क्रमणे** ।३।१।१४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे[3] क्यङ् । कष्टाय क्रमते—कष्टायते, पापं कर्तुमुत्सहत इत्यर्थः ॥ **(सत्र[4]कक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्)** । कण्वं पापं चिकीर्षति । सत्रायते । कक्षायते ॥ **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः** ।३।१।१५। कर्मीभूताभ्यां रोमन्थतपोभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति—रोमन्थायते ॥ **(हनुचलन इति वाच्यम्)** । चर्वितस्याकृष्य पुनश्चर्वणेमि इत्यर्थः । नेह,—कीटो रोमन्थं वर्तयति ॥ **(तपसः परस्मैपदं च)** । तपश्चरति तपस्यति ॥ **बाष्पोष्मभ्यामुद्वमने** । ३।१।१६। बाष्पमुद्वमति—बाष्पायते । ऊष्मायते ॥ **(फेनाच्चेति वक्तव्यम्)** । फेनायते ॥ **शब्दवैरकलहाभ्रकण्वमेघेभ्यः**

---

टिप्प०—१ ओजायते—ओजस्वीवाचरतीति विग्रहो बोध्यः । २ क्यङेवानुवर्तते स्वरितत्वाद नतु क्यष् । ३ कष्टायेति निर्देशादेव चतुर्थ्यन्तं पदं लभ्यते । ४ सत्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् । ५ अस्वपदविग्रहोऽत्र भवति ।

**करणे** ।३।१।१७। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् । शब्दं करोति—शब्दायते ॥ **(सुदिनदुर्दिननीहारेभ्यश्च)** । सुदिनायते । दुर्दिनायते । नीहारायते ॥ **(प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च)** । 'प्रातिपदिकाद्धात्वर्थे णिच् स्यात्'। इष्ठे यथा—प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुल्लोप-यणादिलोप-प्रस्थ-स्फाद्यादेश-भसंज्ञास्तद्वणणावपि स्युः । पटुमाचष्टे-पटयति । परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । णौचङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् ॥ **पुच्छभाण्डचीवराण्णिङ्** ।३।१।२०। **(पुच्छादुदसने व्यसने पर्यसने च)** । विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । परिपुच्छयते ॥ **(भाण्डात्समाचयने)** । संभाण्डयते । समवभाण्डत ॥ **(चीवरादर्जने परिधाने च)** । संचीवरयते भिक्षुः ॥ **मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्** ।३।१।२१। कृञर्थे[1] । मुण्डं करोति—मुण्डयति । **(व्रताद्भोजनतन्निवृत्त्योः)** । पयः[2] शूद्रान्नं[3] वा व्रतयति ॥ **(वस्त्रात्समाच्छादने)** । संवस्त्रयति ॥ **(हल्यादिभ्यो ग्रहणे)** । हलिकल्योरदन्तत्वं च निपात्यते । हलिं कलिं वा गृह्णाति—हलयति । कलयति । महद्धलं हलिः । कृतं गृह्णाति-कृतयति[4] । तूस्तानि विहन्ति—वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे ॥ **(सत्यार्थवेदानामापुग्वक्तव्यः)** । सत्यापयति[5] । अर्थापयति । वेदापयति । पाशं विमुञ्चयति—विपाशयति । रूपं पश्यति—रूपयति । वीणयोपगायति-उपवीणयति । तूलेनानुकुष्णाति—अनुतूलयति—तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति—उपश्लोकयति । सेनयाभियाति—अभिषेणयति । लोमान्यनुमार्ष्टि —अनुलोमयति ॥ **त्वच संवरणे** । पचाद्यच् । त्वचं गृह्णाति—त्वचयति । वर्मणा संनह्यति—संवर्मयति । वर्णं गृह्णाति—वर्णयति । चूर्णैरवध्वंसते—अवचूर्णयति ॥

**॥ इति नामधातुप्रक्रिया ॥**

---

टिप्प०—१ अयं क्वचित्क्रियासामान्ये, प्राचुर्येण तु क्रियाविशेषे । २ पयो व्रतयति । अश्नातीत्यर्थः । ३ शूद्रान्नं व्रतयति । वर्जयतीत्यर्थः । ४ उपकारं स्वीकरोतीत्यर्थः । ५ सत्यं करोत्याचष्टे वेत्यर्थः ।

## अथात्मनेपदप्रक्रिया ।

**कण्ड्वादिभ्यो यक्** ।३।१।२७। एभ्यो धातुभ्यो[1] नित्यं यक् स्यात् स्वार्थे ॥ कण्डूञ् गात्रविघर्षणे । कण्डूयति, कण्डूयते । इत्यादि ॥ **कर्तरि कर्मव्यतिहारे** ।१।३।१४। क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं अन्यः करोतीत्यर्थः ॥ **न गतिहिंसार्थेभ्यः** ।१।३।१५। व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥ **(हरतेरप्रतिषेधः)** । संप्रहरन्ते राजानः ॥ **इतरेतरान्योन्योपपदाच्च** ।१।३।१६। **(परस्परोपपदाच्चेति वक्तव्यम्)** । इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ **नेर्विशः**[2] ।१।३।१७। निविशते ॥ **परिव्यवेभ्यः क्रियः** ।१।३।१८। परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥ **विपराभ्यां जेः** ।१।३।१९। विजयते । पराजयते ॥ **क्रीडोऽनुसंपरिभ्यश्च** ।१।३।२१। चादाङः । अनुक्रीडते । संक्रीडते । आक्रीडते ॥ **(समोऽकूजने)** । संक्रीडते । कूजने तु-संक्रीडति चक्रम् ॥ **(आगमेः क्षमायाम्)** । ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः ॥ **(शिक्षेर्जिज्ञासायाम्)**[3] । धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥ **वृत्तिसर्गतायनेषु क्रमः** ।१।३।३८। वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः[4] । सर्ग उत्साहः । अध्ययनाय क्रमते[5] । क्रमन्तेऽस्मिञ्छास्त्राणि, स्फीतानि भवन्तीत्यर्थः ॥ **आङ उद्गमने** ।१।३।४०। आक्रमते सूर्यः ॥ **(ज्योतिरुद्गमन इति वाच्यम्)** । नेह । आक्रामति धूमो हर्म्यतलात् ॥ **वेः पादविहरणे** ।१।३।४१। साधु विक्रमते वाजी ॥ **प्रोपाभ्यां समर्थाभ्याम्** ।१।३।४२। प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम्? प्रक्रामति । गच्छ-

---

टिप्प०—१ प्रातिपदिकव्यावृत्त्यर्थं धातुग्रहणम् । २ अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणम् । तेनेह न,—मधूनि विशन्ति भ्रमराः । 'इत्युक्त्वा मैथिली भर्तुरङ्के निविशती भयात्' इत्यत्र तु अङ्कानि विशतीति पाठ्यम् । ३ 'शिक्ष विद्योपादाने' इत्यस्य नेह ग्रहणम्, अनुदात्तेत्त्वादेवात्मनेपदसिद्धेः; किंतु शकेः सन्नन्तस्येति ध्वनयति—धनुर्विषय इत्यादिना । ४ न प्रतिहन्यते इत्यर्थः । ५ उत्सहते इत्यर्थः ।

तीत्यर्थः। उपक्रामति, आगच्छतीत्यर्थः॥ **अनुपसर्गाद्वा** ।१।३।४३। क्रामति। क्रमते॥ **अपह्नवे ज्ञः** ।१।३।४४। शतमपजानीते। अपलपतीत्यर्थः॥ **अकर्मकाच्च** ।१।३।४५। सर्पिषो जानीते, सर्पिषोपायेन प्रवर्तत इत्यर्थः॥ **समवप्रविभ्यः स्थः** ।१।३।२२। संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। **(आङः प्रतिज्ञायामुपसंख्यानम्)**। शब्दं नित्यमातिष्ठते॥ **प्रकाशनस्थेयाख्ययोश्च** ।१।३।२३। गोपी कृष्णाय तिष्ठते, आशयं प्रकाशयतीत्यर्थः। 'संशय्य कर्णादिषु तिष्ठते यः'। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः॥ **उदोऽनूर्ध्वकर्मणि** ।१।३।२४। मुक्तावुत्तिष्ठते। अनूर्ध्वेति किम्? पीठादुत्तिष्ठति॥ **उपान्मन्त्रकरणे** ।१।३।२५। आग्नेय्या आग्नीध्रमुपतिष्ठते। मन्त्रकरणे किम्? भर्तारमुपतिष्ठति यौवनेन॥ **(उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्)**। आदित्यमुपतिष्ठते। गङ्गायमुनामुपतिष्ठते। रथिकानुपतिष्ठते, मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोतीत्यर्थः॥ **(वा लिप्सायाम्)**। भिक्षुकः प्रभुमुपतिष्ठति-उपतिष्ठते वा॥ **उद्विभ्यां तपः** ।१।३।२७। अकर्मकादित्येव। उत्तपते। वितपते, दीप्यत इत्यर्थः। **(स्वाङ्गकर्मकाच्चेति वक्तव्यम्।)** उत्तपते वितपते वा पाणिम्। नेह—सुवर्णमुत्तपति॥ **आङो यमहनः** ।१।३।२८। आयच्छते। आहते। अकर्मकात्स्वाङ्गकर्मकादित्येव। नेह—परस्य शिर आहन्ति॥ **आत्मनेपदेष्वन्यतरस्याम्** ।२।४।४४। हनो वधादेशो वा लुङि। आवधिष्ट। आवधिषाताम्। आवधिषत॥ **हनः सिच्** ।१।२।१४। कित्। अनुनासिकलोपः। आहत। आहसाताम्। आहसत॥ **यमो गन्धने** ।१।२।१५। सिच् कित्। गन्धनं सूचनं-परदोषाविष्करणम्। उदायत। गन्धने किम्? उदायंस्त पादम्, आकृष्टवानित्यर्थः॥ **समो**

---

टिप्प०-१ प्रकाशनं ज्ञापनम्। स्थेयो विवादपदनिर्णेता तिष्ठतेऽस्मिन्विवादपदनिर्णयार्थमिति व्युत्पत्तेः। २ मन्त्रः करणं यत्र तन्मन्त्रकरणं स्तुतिः, तत्र वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं स्यात्। आग्नेय्येति। अग्निदेवताकया ऋचा आग्नीध्रमग्निविशेषं स्तौतीत्यर्थः। ३ चकारेणाकर्मकस्य संग्रहः। ४ तङीत्येव सुवचम्। ५ 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति वृत्तिस्थं पाठमुपेक्ष्य भाष्यस्थं पाठमनुसरति—समो गम्यृच्छिभ्यामिति।

**गम्यृच्छिभ्याम्** ।१।३।२९। अकर्मकाभ्यामित्येव । संगच्छते ॥ **वा गमः** ।१।२।१३। गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । संगसीष्ट । संगंसीष्ट । समगत, समगंस्त । समृच्छिष्यते । अकर्मकाभ्यां किम्? ग्रामं संगच्छति । (**विदिप्रच्छिस्वरतीनामुपसंख्यानम्** ।) वेत्तेरेव[1] ग्रहणम् । संवित्ते । संविदाते ॥ **वेत्तेर्विभाषा** ।७।१।७। वेत्तेः परस्य झादेशस्यातो रुडागमो वा । संविद्रते, संविदते । संपृच्छते । संस्वरते । अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत्, शृणु,—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ १ ॥

वहति भारम् । नदी वहति, स्यन्दत इत्यर्थः । जीवति । नृत्यति । प्रसिद्धेर्यथा—मेघो वर्षति । कर्मणोऽविवक्षातो यथा—'हितान्न यः संशृणुते स किंप्रभुः' ॥ **संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः**[2] ।१।३।३६। शास्त्रे[3] नयते । उत्सञ्जने—दण्डमुन्नयते, उत्क्षिपतीत्यर्थः । माणवकमुपनयते[4] । कर्मकरानुपनयते । करं विनयते, राज्ञे देयं भागं परिशोधयतीत्यर्थः । शतं विनयते, धर्मार्थे विनियुङ्क्ते इत्यर्थः ॥ (**उपसर्गादस्यत्यूह्योर्वेति वाच्यम्**) । वन्धान्निरस्यति । निरस्यते । समूहति । समूहते ॥ **उपसर्गाद्ध्रस्व ऊहतेः** ।७।४।२३। यादौ किति । ब्रह्म समुह्यात् । अग्निं समुह्य ॥ **निसमुपविभ्यो ह्वः** ।१।३।३०। निह्वयते ॥ **स्पर्धायामाङः** ।१।३।३१। कृष्णश्चाणूरमाह्वयते । स्पर्धायां किम्? पुत्रमाह्वयति ॥ **उदश्चरः सकर्मकात्** ।१।३।५३। धर्ममुच्चरते । उल्लङ्घ्य गच्छ-

---

टिप्प०—१ परस्मैपदिसाहचर्यादाह—वेत्तेरेवेति । विन्दतिर्हि स्वरितेत् । सत्ताविचारणार्थयोस्तु अनुदात्तेत्त्वादेव सिद्धम् । नच निरनुबन्धकपरिभाषयैव वेत्तेर्ग्रहणं स्यादिति वाच्यम् । 'लुग्विकरणालुग्विकरणयोः—' इति परिभाषया विन्दतेर्ग्रहणप्रसङ्गात् । २ अत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे प्रयोगोपाधयः । ३ शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः । तेन च शिष्यसंमाननं फलितमित्यादिसर्वेषूदाहृतप्रयोगेषु नयतेरर्थाः सिद्धान्तकौमुद्यां स्पष्टमभिहिताः । ४ विधिनाऽऽत्मसमीपं प्रापयतीत्यर्थः ।

तीत्यर्थः ॥ **समस्तृतीयायुक्तात्** ।१।३।५४। रथेन संचरते ॥ **दाणश्च सा चेच्चतुर्थ्यर्थे** ।१।३।५५। समो दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते कामी ॥ **उपाद्यमः स्वकरणे** ।१।३।५६। स्वकरणं स्वीकारः । भार्यामुपयच्छते ॥ **विभाषोपयमने** ।१।२।१६। यमः सिच् किद्वा विवाहेऽर्थे । रामः सीतामुपायत, उपायंस्त वा, उदवोढेत्यर्थः ॥ **ज्ञाश्रुस्मृदृशां सनः** ।१।३।५७। सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥ **नाऽनोर्ज्ञः** ।१।३।५८। पुत्रमनुजिज्ञासति ॥ **प्रोपाभ्यां युजेरयज्ञपात्रेषु** ।१।३।६४। प्रयुङ्क्ते । उपयुङ्क्ते ॥ (**स्वराद्यन्तोपसर्गादिति वाच्यम्**) । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम्? द्वन्द्वं न्यग्वि पात्राणि प्रयुनक्ति ॥ **समः क्ष्णुवः** ।१।३।६५। संक्ष्णुते शस्त्रम् ॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः** ।१।३।३२। गन्धनं हिंसा । उत्कुरुते, सूचयतीत्यर्थः ॥ अपक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते, भर्त्सयत इत्यर्थः । हरिमुपकुरुते । सेवते । परदारान्प्रकुरुते । तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । कथाः प्रकुरुते, प्रकथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम्? कटं करोति ॥ **इति तिङन्ते आत्मनेपदप्रक्रिया** ॥

## अथ तिङन्ते परस्मैपदप्रक्रिया ॥ ७ ॥

'शेषात्कर्तरि परस्मैपदम्'[2] । श्वि । श्वयति ॥ **विभाषा श्वेः** ।६।१।३०। संप्रसारणं लिटि यङि च । शुशाव । शुशुवतुः ॥ (**श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः**) । शिश्वाय । शिश्वियतुः । शिश्वियुः । शूयात् । जृस्तम्भ्वित्यङ् वा ॥ **श्वयतेरः** ।७।४।१८। अङि । अश्वत्, अश्वन् । विभाषेति चङ् । अशिश्वियत् । अश्वयीत् ॥ **अनुपराभ्यां कृञः** ।१।३।७९। कर्तृगेऽपि फले गन्धनादौ च परस्मैपदं स्यात् ।

---

टिप्प०–१ ननु भार्यास्वीकारमात्रम् । अत एव भट्टिः 'उपायंस्त महास्त्राणि' इति प्रायुङ्क्त । २ अनुदात्तङित इत्यादिष्वात्मनेपदमेवेति नियमान्न तत्र परस्मैपदस्य संभवः । तथा च कर्तरि परस्मैपदमित्यनेन परस्मैपदमेवेति नियमिते तद्भिन्नानामेव तद्भविष्यतीति शेषग्रहणं स्पष्टप्रतिपत्त्यर्थमित्याहुः ।

अनुकरोति । पराकरोति ॥ **अभिप्रत्यतिभ्यः क्षिपः** ।१।३।८०। **क्षिप** प्रेरणे । स्वरितेत् । अभिक्षिपति ॥ **प्राद्वहः** ।१।३।८१। प्रवहति ॥ **परेर्मृषः** ।१।३।८२। परिमृष्यति ॥ **व्याङ्परिभ्यो रमः** ।१।३।८३। विरमति । आरमति ॥ **उपाच्च** ।१।३।८४। यज्ञदत्तमुपरमति, उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥ **विभाषाऽकर्मकात्** ।१।३।८५। उपाद्रमेः परस्मैपदं वा स्यात् । उपरमति-उपरमते, निवर्तत इत्यर्थः ॥ **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः** ।१।३।८६। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । प्रावयति, प्रापयतीत्यर्थः । द्रावयति । स्रावयति ॥ **क्रीङ्जीनां णौ** ।६।१।४८। आत्वं स्यात् । अध्यापयति ॥ **णौ च संश्चङोः** ।१।४।५१। सन्परे चङ्परे च णौ इङो गाङ् वा । अध्यजीगपत् । अध्यापिपत् । क्रापयति । जापयति ॥ **निगरणचलनार्थेभ्यश्च** ।१।३।८७। निगारयति । चलयति ॥ (**अदेः प्रतिषेधः**) । आदयते देवदत्तेन ॥ **अणावकर्मकाच्चित्तवत्कर्तृकात्** ।१।३।८८। ण्यन्तात्परस्मैपदम् । शेते कृष्णः, तं गोपी शाययति ॥ **न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः** ।१।३।८९। एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते ॥ (**धेट उपसंख्यानम्**) । धापयते । अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव । वत्सान्पाययति पयः ॥ इति परस्मैपदप्रक्रिया । **समाप्ता पदव्यवस्था** ॥

## अथ तिङन्ते भावकर्मप्रक्रिया ॥ ८ ॥

**भावकर्मणोः** ।१।३।१३। लस्य तङानौ स्तः ॥ **सार्वधातुके यक्** ।३।१।६७। भावकर्मवाचिनि सार्वधातुके धातोर्यक् स्यात् । भावः क्रिया । सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङ्वाच्यक्रियाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादिकम्, किंतु एक-

---

टिप्प०-१ निगरणं भक्षणम् । २ क्रियाफलस्य कर्तृगामित्वविवक्षायामात्मनेपदे प्राप्ते परस्मैपदार्थमिदम् ।

वचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ॥ **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च** ।६।४।६२। उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षे अयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता, भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट, भविषीष्ट ॥ **चिण् भावकर्मणोः** ।३।१।६६। च्लेश्चिण् स्याद्भावकर्मवाचिनि ते परे । अभावि । अभाविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्, अन्वभविषाताम् । णिलोपः, भाव्यते । भावयांचक्रे । भावयांबभूवे । भावयामासे । चिण्वदिट् । आभीयत्वेनासिद्धत्वाण्णिलोपः । भावयिष्यते, भाविष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भावयिषीष्ट, भाविषीष्ट । अभावि । अभाविषाताम्, अभावयिषाताम् । बुभूष्यते । बुभूषांचक्रे । बुभूषिता । बुभूषिष्यते । बोभूय्यते । अकृत्सार्वधातुकेति दीर्घः । स्तूयते विष्णुः । स्ताविता, स्तोता । स्ताविष्यते, स्तोष्यते । अस्तावि । अस्ताविषाताम्, अस्तोषाताम् । गुणोर्तीति गुणः । अर्यते । स्मर्यते । ऋच्छत्यृतामिति गुणः । आरे । सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । आरिता, अर्ता । स्मारिता, स्मर्ता । नलोपः, स्रस्यते । सस्रंसे । इदितस्तु—नन्द्यते । इज्यते ॥ **तनोतेर्यकि** ।६।४।४४। आदन्तादेशो वा स्यात् । तायते, तन्यते ॥ **तपोऽनुतापे च** ।३।१।६५। च्लेश्चिण्न कर्मकर्तरि अनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्वम् । दीयते । धीयते । ददे । दधे ॥ **आतो युक् चिण्कृतोः** ।७।३।३३। आदन्तानां युगागमश्चिणि ञ्णिति कृति च । दायिता, दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् । शम्यते मोहो मुकुन्देन ॥ **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्**[२] ।६।४।९३।

---

टिप्प०—१ च्लेः सिच् इत्यतश्च्लेरिति 'चिण् ते पदः' इत्यतस्ते इति चानुवर्तते । तत्रत्यं तु चिण्पदं 'न रुधः' इति निषेधेन तिरोहितमिति पुनरत्र चिण्ग्रहणं कृतम् । २ शामितेत्यादौ 'जनीजृष्' इत्यादिना मित्त्वेन मितामुपधाया नित्यं ह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते ।

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा । शामिता, शमिता, शमयिता । शामयिष्यते, शमिष्यते, शमयिष्यते । ण्यन्तत्वाभावे—शम्यते मुनिना ॥ **नोदात्तोपदेशस्य मान्तस्यानाचमेः** ।७।३।३४। उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् ? अगामि । मान्तस्येति किम् ? अवादि । अनाचमेरिति किम् ? आचामि ॥ (**अनाचमिकमिवमीनामिति वक्तव्यम्**) । अकामि । अवामि ॥ **भञ्जेश्च चिणि** ।६।४।३३। नलोपो वा । अभाजि, अभञ्जि । लभ्यते ॥ **विभाषा चिण्णमुलोः** ।७।१।६९। लभेर्नुम् । अलम्भि, अलाभि ॥ **इति तिङन्ते भावकर्मप्रक्रिया ॥**

## अथ तिङन्ते कर्मकर्तृप्रक्रिया ॥ ९ ॥

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामपि अकर्मकत्वात्कर्तरि भावे च लः ॥ **कर्मवत्कर्मणा तुल्यक्रियः** ।३।१।८७। कार्यातिदेशोऽयम् । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् । तेन यगात्मनेपदं चिण् चिण्वदिट् च स्युः । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे तु भिद्यते काष्ठेन ॥ (**भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वक्तव्यम्**) । अलंकुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट, अवाकरिष्ट । गिरते । अगीर्ष्ट, अगरिष्ट । आद्रियते । आदृत । किरादिस्तुदाद्यन्तर्गणः । चिकीर्षते कटः । अचिकीर्षिष्ट ॥ **तपस्तपःकर्मकस्यैव** ।३।१।८८। कर्ता कर्मवत् । तप्यते तपस्तापसः, अर्जयतीत्यर्थः । अतप्त । तपःकर्मकस्यैवेति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥ (**सकर्मकाणां प्रतिषेधो वक्तव्यः**) । अजां ग्रामं नयति । (**दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्**) ॥ **न दुहस्नुनमां यक्चिणौ** ।३।१।८९। एषां कर्मकर्तरि यक्चिणौ न । शप् । तस्य

---

टिप्प०—१ अकर्मकत्वाद्भावे लः । २ चिणि आयादय इति णिङभावे । ३ यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते । ४ यद्यपि शास्त्रातिदेशेऽपि लक्ष्यं सिध्यति तथापि शास्त्रस्यापि कार्यार्थतया मुख्यत्वात्कार्यातिदेश एवाश्रितः

लुक् । गौः पयो दुग्धे ॥ **अचः कर्मकर्तरि** ।३।१।६२। अजन्ताच्लेश्चिण्वा कर्मकर्तरि[1] ते परे। अकारि, अकृत॥ **दुहश्च** ।३।१।६३। तथा। अदोहि। अदुग्ध। लुग्वेति क्सस्य लुक्पक्षेऽयम्। अधुक्षत। उदुम्बरः फलं पच्यते॥ **कुषिरजोः प्राचां श्यन्परस्मैपदं च** ।३।१।९०। अनयोः कर्मकर्तरि न यक् किंतु श्यन्[2] परस्मैपदं च । आत्मनेपदापवादः। कुष्यति। कुष्यते पादः। रज्यति। रज्यते वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः। कोषिषीष्ट। रंक्षीष्ट॥

**इति तिङन्ते कर्मकर्तृप्रक्रिया ॥**

## अथ तिङन्ते लकारार्थप्रक्रिया ॥ १० ॥

**अभिज्ञा[3]वचने लृट्** । ३ । २ । ११२ । स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट्। लङोऽपवादः ॥ **वस निवासे**। स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे चेतयसे इत्यादि प्रयोगेऽपि ॥ **न यदि** ।३।२।११३। यद्योगे[4] उक्तं न। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ॥ **विभाषा साकाङ्क्षे** ।३।२।११४। उक्तविषये लृड् वा। लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः। स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो[5] लक्षणं चारणं लक्ष्यम्। पक्षे लङ्। 'परोक्षे लिट्'। चकार। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। सुप्तोऽहं किल विललाप। (**अत्यन्तापह्नवे लिड् वक्तव्यः**)। कलिङ्गेष्ववात्सीः? नाहं कलिङ्गान् जगाम ॥ **प्रश्ने चासन्नकाले** ।३।२।११७। पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्त आसन्नकाले[6]। अगच्छत्किम्? जगाम किम्? ॥ **लट् स्मे** ।३।२।११८। लिटोऽपवादः। यजति स्म युधिष्ठिरः ॥ **अपरोक्षे च** ।३।२।११९। भूतानद्यतने लट् स्मयोगे। एवं स्म

---

टिप्प०-१ कर्मकर्तरीत्येव। अदोहि गौर्गोपेनेत्यत्र तु नित्यम्। २ तस्मिन्नेव विषय इति भावः। ३ अभिज्ञा स्मृतिः सा उच्यते बोध्यतेऽनेनेति विग्रहस्तदाह-स्मृतिबोधिनीत्यादि। ४ लृटः प्रतिषेधे उत्सर्गो लङ्। ५ प्रसिद्धत्वाज्ज्ञापकमित्यर्थः। ६ पञ्चवर्षाभ्यन्तरमासन्नकालं पञ्चवर्षातीते विप्रकृष्टकालमित्याहुः। आसन्नाकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थ प्रष्टव्ये सतीत्यर्थः।

पिता ब्रवीति ॥ **ननौ पृष्टप्रतिवचने** ।३।२।१२०। भूते लट् । अकार्षीः किम्? ननु करोमि भोः ॥ **नन्वोर्विभाषा** ।३।२।१२१। अकार्षीः किम्? न करोमि, नाकार्षम्; अहं नु करोमि, अहं न्वकार्षम् ॥ **पुरि लुङ् चास्मे** ।३।२।१२२। पुरायोगे भूतानद्यतने वा लुङ् चाल्लट् न तु स्मयोगे । पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः, अवात्सुः, अवसन्, ऊषुर्वा । अस्मे इति किम्? यजति स्म पुरा । भविष्यतीत्यनुवर्तमाने ॥ **यावत्पुरानिपातयोर्लट्** ।३।३।४। यावद्भुङ्क्ते । पुराभुङ्क्ते । निपातयोः किम्? यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ॥ **विभाषा कदाकर्ह्योः** ।३।३।५। लट् वा स्यात् । कदा कर्हि वा भुङ्क्ते, भोक्ष्यते, भोक्ता वा? ॥ **वर्तमानसामीप्ये वर्तमानवद्वा** ।३।३।१३१। वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि? अयमागच्छामि, आगमं वा । कदा गमिष्यसि? एष गच्छामि, एष गमिष्यामि वा ॥ **आशंसायां भूतवच्च** ।३।३।१३२। भविष्यत्काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीत्, वर्षति, वर्षिष्यति वा । धान्यमवाप्स्म, वपामः, वप्स्यामो वा ॥ **क्षिप्रवचने लट्** ।३।३।१३३। क्षिप्रपर्यायेऽउपपदे पूर्वविषये लट् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति शीघ्रं वप्स्यामः ॥ **आशंसावचने लिङ्** ।३।३।१३४। आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात्, न भूतवत् । गुरुश्चेदुपेयादाशंसे–अधीयीय । **हेतुहेतुमतोर्लिङ्** ।३।३।१५६। वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह–हन्तीति पलायते ॥ **इच्छार्थेषु लिङ्लोटौ** ।३।३।१५७। इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् । एवं कामये, प्रार्थये । **(कामप्रवेदन इति वक्तव्यम्)** नेह–इच्छन्करोति ॥ **लिङ् च** ।३।३।१५९। समानकर्तृकेषु इच्छार्थेषु । भुञ्जीय इतीच्छति । विधिनिमन्त्रणेति लिङ् । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । विधौ यजेत । निमन्त्रणं नियोगकरणम्,

---

टिप्प०–१ निश्चितं भोक्ष्यत इत्यर्थः । २ आशंसनमाशंसा अप्राप्तस्य प्राप्तुमिच्छा । आशंसायां वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्यतीत्युक्तम् । ३ क्षिप्रवचने इत्यत्र वचनग्रहणं स्वरूपनिरासार्थम् तदाह–क्षिप्रपर्यायेति । ४ भूतवर्तमानवत्प्रत्यययोरपवादः

आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत । आमन्त्रणं कामचारानुज्ञा । इह आसीत । अधीष्टः सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेद्भवान् । संप्रश्नः संप्रधारणम् । किं भो वेदमधीयीय, उत तर्कम्? प्रार्थनं याच्ञा । भो भोजनं लभेय? एवं लोट् ॥ **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च** ।३।३।१६३। प्रैषो[1] विधिः । अतिसर्गः कामचारानुज्ञा । भवता यष्टव्यम् । चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम् । भवान्यजताम् ॥ **अर्हे कृत्यतृचश्च** ।३।३।१६९। चाल्लिङ् । त्वं कन्यां वहेः ॥ **शकि लिङ् च** ।३।३।१७२। शक्तौ लिङ् स्यात्, चात्कृत्याः । त्वं भारं वहेः ॥ **धातुसंबन्धे प्रत्ययाः** ।३।४।१। धात्वर्थानां[2] संबन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन् ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकं दर्शनमित्यर्थः । सोमयाज्यस्य पुत्रो भविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् ॥ **क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः** ।३।४।२। पौनःपुन्ये भृशार्थे च द्योत्ये[3] धातोर्लोट् तस्य च हिस्वौ स्तः । तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे नानयोरतिदिश्येते, हिस्वविधानसामर्थ्यात् । तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि, आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु ॥ **समुच्चयेऽन्यतरस्याम्** ।३।४।३। अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं[4] वा स्यात् ॥ **यथाविध्यनुप्रयोगः पूर्वस्मिन्** । ।३।४।४। आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः ॥ **समुच्चये सामान्यवचनस्य** ।३।४।५। समुच्चये लोड्विधौ सामान्यार्थस्य

---

टिप्प०–१ प्रैषो विधिरिति विधिग्रहणे कर्तव्ये प्रैषग्रहणं शिष्यबुद्धिवैशद्यार्थमित्याहुः । २ विषयबहुत्वापेक्षं बहुवचनम् । एकैकविषयापेक्षायां तु धात्वर्थयोरिति बोध्यम् ॥ ३ क्रियासमभिहारो धातोरेवार्थः लोट् तु द्योतक इति भावः । ४ धातोर्लोट् लोटो हिस्वौ तध्वमोर्विषये वेत्यर्थः ।

धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। ततः संख्या-कालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः॥ **(क्रियासमभिहारे द्वे वाच्ये)**। याहि याहीति याति। पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः। एककर्तृकं वर्त-मानकालिकं यानं यातीत्यस्य। इतिशब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति। एवं–यातः। यान्ति। यासि। याथः। याथ। यात यातेति यूयं याथ। याहि याहीत्ययासीत्, यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वंविषये तु पक्षे–अधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चये–सक्तून्पिब, धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व, दाधिक-मास्वादस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत, खादतेत्यभ्यवहरथ। भुङ्ग्ध्वम्, आस्वाद-ध्वम् इमित्यभ्यवहरध्वे। पक्षे तु–हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः। पक्षे–सक्तून् पिबति। धानाः खादति। अन्नं भुङ्क्ते। दाधिक-मास्वादयते। एतेन—'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः। विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः' इति व्याख्यातम्। अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। इह 'पुनःपुनश्चस्कन्द' इत्यादिरर्थ इति तु व्याख्यानं भ्रममूलकमेव; द्वितीयसूत्रे क्रियासमभिहारे इत्यस्यानुवृत्तेः, लोडन्तस्य द्वित्वापत्तेश्च। 'पुरीमवस्कन्द' इत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचिद्भ्रम एव 'पुरुषवचनसंज्ञे इह न' इत्युक्तत्वात्॥ **इति तिङन्ते लकारार्थप्रक्रिया॥**

## इति तिङन्तप्रक्रिया समाप्ता।

---

टिप्प०–१ एवं याहि याहीति यातः यान्तीत्येवार्थः। २ वा च तध्वमोरित्युक्तत्वात् हिस्वा-भावपक्षे इत्यर्थः। ३ विध्यादिलोड्विषये तु अधीध्वमित्येवानुप्रयोक्तव्यम्। ४ आदिशब्देन मोषणहरणे ग्राह्ये।

## अथ कृदन्तप्रकरणम्

धातोः[1] ।३।१।९१। आ[2] तृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा ॥ **वाऽसरूपोऽस्त्रियाम्** ।३।१।९४। अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य वा बाधकः स्त्र्यधिकारोक्तं विना ॥ **कृत्याः (प्राङ् ण्वुलः)** ।३।१।९५। ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥ **कर्तरि कृत्** ।३।४।६७। इति प्राप्ते ॥ **तयोरेव कृत्यक्तखलर्थाः** ।३।४।७०। एते भावकर्मणोरेव स्युः ॥ **तव्यत्तव्यानीयरः**[3] ।३।१।९६। धातोरेते स्युः । एधितव्यम् । एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया ॥ **(केलिमर उपसंख्यानम्)** । पचेलिमा माषाः, पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः, भेत्तव्याः । कर्मणि प्रत्ययः ॥ **(वसेस्तव्यत्कर्तरि णिच्च)** । वसतीति वास्तव्यः ॥ **कृत्यचः** ।८।४।२९। उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य[4] नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम् ? प्रमग्नः ॥ **(निर्विण्णस्योपसंख्यानम्)**[5] ॥ **णेर्विभाषा** ।८।४।३०। प्राग्वत् । प्रयापणीयम्, प्रयापनीयम् ॥ **हलश्चेजुपधात्** ।८।४।३१। हलादेरिजुपधाद्धातोः परस्य कृन्नस्याचः परस्य णो वा । प्रकोपणीयम्, प्रकोपनीयम् । हलः किम् ? प्रोहणीयम् । इजुपधात्किम् ? प्रवपणीयम् ॥ **इजादेः सनुमः** ।८।४।३२। सनुमश्चेद्भवति[6] इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव ॥ इखि गतौ । प्रेङ्खणीयम् । इजादेः किम् ? ॥ मगि सर्पणे । प्रमङ्गनीयम् ॥ **वा निंसनिक्षनिन्दाम्** ।८।४।३३। एषां नस्य णो वा कृति । प्रणिंसितव्यम् ॥ **न भाभूपूकमिगमिप्यायीवेपाम्** ।८।४।३४। एभ्यः कृन्नस्य णो न । प्रभानीयम्, प्रभवनीयम् ॥ **(ण्यन्तभादीनामुपसंख्यानम्)** प्रभापनीयम् ॥ **कृत्यल्युटो**

---

टिप्प०–१ कृतां तिङ्ज्ञानाधीनत्वात्तिङ्निरूपणानन्तरमेव कृतां निरूपणमुचितमिति तिङो निरूप्य कृतो निरूपयितुमाह–धातोरिति । २ तृतीयाध्यायसमाप्तिपर्यन्तमिति भावः । ३ अत्रत्यौ तकाररेफौ स्वरार्थाविति ज्ञेयम् । ४ अच उत्तरस्येत्यस्य कृतो विशेषणत्वे तु प्रयापणमित्यादौ न स्यादिति भावः । ५ अचः परत्वाभावादप्राप्ते वचनम् । परस्य णत्वं पूर्वस्य ष्टुत्वम् ॥ ६ कृत्यच इत्येव सिद्धे नियमार्थमिदमित्याह—सनुमश्चेत्यादि ।

**बहुलम्** ।३।३।११३। 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति' ॥ १ ॥ स्नान्त्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥ **ऋदुपधाच्चाक्लृपिचृतेः** ।३।१।११०। क्यप्स्यात् । वृत्,–वृत्यम् । वृधु,–वृध्यम् । क्लृपिचृत्योस्तु,–कल्प्यम्, चर्त्यम् ॥ **अचो यत्** ।३।१।९७। चेयम् । जेयम् ॥ **ईद्यति** ।६।४।६५। आतः । गुणः । देयम् । ग्लेयम् ॥ **पोरदुपधात्** ।३।१।९८। पवर्गान्ताददुपधाद्यत् । ण्यतोऽपवादः । शप्यत् । लभ्यम् ॥ **आङो यि** ।७।१।६५। आङः परस्य लभेर्नुम् यादौ प्रत्यये । आलम्भ्यो गौः ॥ **उपात्प्रशंसायाम्** ।७।१।६६। उपलम्भ्यः साधुः । स्तुतौ किम्? उपलब्धुं शक्यः–उपलभ्यः ॥ **शकिसहोश्च** ।३।१।९९। शक्यम् । सह्यम् ॥ **गदमदचरयमश्चानुपसर्गे** । ।३।१।१००। गद्यम् । मद्यम् । चर्यम् ॥ (**चरेराङि चागुरौ**) । आचर्यो देशः । अगुरौ किम्? आचार्यो गुरुः । यम्यम् ॥ **अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु** ।३।१।१०१। अवद्यं पापम् । पण्यं विक्रेयम् । शतेन वर्या कन्या ॥ **वह्यं करणम्** ।३।१।१०२। वहन्त्यनेनेति वह्यं शकटम् । वाह्यमन्यत् ॥ **अर्यः स्वामिवैश्ययोः** ।३।१।१०३। अनयोः किम्? आर्यो ब्राह्मणः ॥ **उपसर्या काल्या प्रजने** ।३।१।१०४। गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजने काल्येति किम्? उपसार्या काशी, प्राप्तव्येत्यर्थः ॥ **अजर्यं संगतम्** ।३।१।१०५। विशेष्यं चेत् न जीर्यतीति–अजर्यम् । सतां संगतम् ॥ **वदः सुपि क्यप् च** ।३।१।१०६। चाद्यत् । ब्रह्मोद्यम्, ब्रह्मवद्यम् ॥ **भुवो भावे** ।३।१।१०७। क्यप् । ब्रह्मणो भावो ब्रह्मभूयम् ॥ **हनस्त च** ।३।१।१०८। चात्क्यप् । ब्रह्मणो हननं ब्रह्महत्या ॥ **एतिस्तुशास्वृदृजुषः क्यप्** ।३।१।१०९। **ह्रस्वस्य पिति कृति तुक्** ।६।१।७१। इत्यः ।

---

टिप्प०–१ यादौ प्रत्यये विवक्षिते उपपूर्वाल्लभेर्नुम् प्रशंसायाम् । सा चेह गम्यमानतया विशेषणम् । धात्वर्थस्तु प्राप्तिरेव । २ एभ्योऽनुपसर्गेभ्यो यत्स्याण्ण्यतोऽपवादः । ३ बोढव्यमित्यर्थकमित्यर्थः । ४ तथा च भट्टिकाव्ये प्रयोगः–'तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्' इति ॥ ५ वचिस्वपीति संप्रसारणम् ।

स्तुत्यः । शिष्यः । वृ इति वृञो ग्रहणं न वृङः,—वृत्यः । वृङस्तु—वार्या ऋत्विजः । आदृत्यः । जुष्यः । पुनः क्यब्बुक्तिः [1]परस्यापि ण्यतो बाधनार्था । अवश्यस्तुत्यः । [2]मृजेर्विभाषा ।३।१।११३। मृजेः क्यब्वा । मृज्यः ॥ ऋहलोर्ण्यत् ।३।१।१२४ ऋवर्णान्ताद्धलन्ताच्च ण्यत् ॥ चजोः कु घिण्यतोः ।७।३।५२। चजोः कुत्वं घिति ण्यति च । (निष्ठायामनिट् इति वक्तव्यम्) । तेनेह न—गर्ज्यम् । मार्ग्यः ॥ ओरावश्यके ।३।१।१२५। ण्यत् । पाव्यम् । 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥' अवश्यलाव्यम् ॥ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।३।४।६८। एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । भवतीति भव्यः । भव्यमनेन वा ॥ भोज्यं भक्ष्ये ।७।३।६९। [3]भोग्यमन्यत् ॥ वचोऽशब्दसंज्ञायाम् ।७।३।६७। न कुत्वम् । वाच्यम् । वाक्यमन्यत् ॥ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।३।१।११४। एते सप्त क्यबन्ता निपात्यन्ते ॥ भिद्योद्ध्यौ नदे ।३।१।११५। नदे किम्? भेत्ता । उज्झिता ॥ [4]पुष्यसिध्यौ नक्षत्रे ।३।१।११६। अधिकरणे क्यन्निपात्यते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन्सिध्यः ॥ विपूयविनीयजित्या मुञ्जकल्कहलिषु ।३।१।११७। विपूयो मुञ्जः । विनीयः कल्कः । जित्यो हलिः ॥ प्रत्यपिभ्यां ग्रहेः ।३।१।११८। (छन्दसीति वक्तव्यम्) । प्रतिगृह्यम् । अपिगृह्यम् । [5]लोकेतु । प्रतिग्राह्यम् । अपिग्राह्यम् ॥ पदास्वैरिबाह्यापक्ष्येषु च ।३।१।११९। अवगृह्यम् । प्रगृह्यं पदम् । अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । [6]ग्रामगृह्या सेना । आर्यैर्गृह्यते आर्यगृह्यः, तत्पक्षाश्रित इत्यर्थः ॥ विभाषा कृवृषोः ।३।१।१२०। कृत्यम् । वृष्यम् । कार्यम् ।

---

टिप्प०—१ परस्यापीति । ओरावश्यके इति प्राप्तस्य तस्यावकाशोऽवश्यलाव्यमित्यावश्यकविवक्षायां स्तुत्य इत्यादौ च क्यपोऽवकाशः । एवं अवश्यस्तुत्य इत्यादावुभयप्राप्तौ विप्रतिषेधेन परत्वात् ण्यत्स्यात् तन्मा भूदिति पुनः क्यब्बुक्तिरिति भावः । २ ऋदुपधत्वान्नित्यं क्यपि प्राप्तेऽयमारम्भः । ३ पालनीयमुपभोग्यं चेत्यर्थः । ४ पुष्यसिध्योः पर्यायत्वेऽपि स्वरूपपरत्वात्सूत्रे द्वन्द्वः । ५ ण्यदेवेति भावः । ६ ग्रामबहिर्भूतेत्यर्थः ।

चर्ष्यम् ॥ **युग्यं च पत्रे** ।३।१।१२१। पत्रं वाहनम् । युग्यो गौः ॥ **अमावस्यदन्यतरस्याम्** ।३।१।१२२। अमा सह वसतोऽस्यां चन्द्रार्कावित्यमावस्या, अमावास्या वा ॥ **अग्नौ[1] परिचाय्योपचाय्यसमूह्याः** ।३।१।१३१। अग्नावेते[2] साधवः ॥ **क्रतौ कुण्डपाय्यसंचाय्यौ** ।३।१।१३०। **चित्याग्निचित्ये च** ।३।१।१३२। चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या ॥ इति कृदन्ते कृत्यप्रक्रिया ॥

## अथ कृदन्ते कृत्प्रक्रिया ॥

**ण्वुल्तृचौ** ।३।१।१३३। धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ॥ **युवोरनाकौ** ।७।१।१। यु वु एतयोरनुनासिकयोरेतौ स्तः । कारकः । कर्ता ॥ **नन्दि[3]ग्रहि[4]पचादि[5]भ्यो ल्युणिन्यचः** ।३।१।१३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनार्दनः । लवणः । गणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । पचः । आकृतिगणोऽयम् ॥ **इगुपधज्ञाप्रीकिरः कः** ।३।१।१३५। एभ्यः कः स्यात् । क्षिपः । बुधः । कृशः । ज्ञः । प्रियः । किरः ॥

---

टिप्प०–१ अग्निरिह न ज्वलनः किंतु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं गृह्यते । २ एते साधव इति । स्थलविशेषेऽभिधेये परिपूर्वाच्चिनोतेः ण्यदायादेशश्च संपूर्वाच्च वहेस्तु संप्रसारणदीर्घौ च निपातनादिति भावः । ३ नन्दनः वामनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः । 'सहितपिदमः संज्ञायाम्' । सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः [शत्रुदमनः] इति नन्द्यादिः । ४ ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी । 'रक्षश्रुवपशां नौ' । निरक्षी निश्रावी निवापी निशायी । 'याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम्' । अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी । 'अचामचित्तकर्तृकाणाम्' । अकारी अहारी अविनायी [विशायी विषायी] विशयी । विषयी देशे । अभिभावी भूते । अपराधी उपरोधी परिभवी परिभावी । इति ग्रहादिः । ५ पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् [दोषट्] जर (रज) मर (मद) क्षम (क्षप) सेव मेष कोप (कोप) मेध नर्त व्रण दर्श सर्प (दम्भ दर्प) जारभर श्वपच । इति पचादिराकृतिगणः ॥

**आतश्चोपसर्गे** ।३।१।१३६। प्रज्ञः । सुग्लः ॥ **पाघ्राध्माधेट्दृशः शः** ।३।१।-१३७। एभ्यः शः स्यात् । पिबः । जिघ्रः । धमः । धयः । पश्यः ॥ **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च** ।३।१।१३८। लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातयः । साहयः । अनुपसर्गात्किम्? प्रलिपः ॥ (**गवादिषु विन्देः संज्ञायाम्**) । गोविन्दः । अरविन्दम् ॥ **ददातिदधात्योर्विभाषा** ।३।१।१३९। ददः । दधः । पक्षे वक्ष्यमाणो णः ॥ **ज्वलितिकसन्तेभ्यो णः** ।३।१।१४०। वा स्यात् । ज्वालः, ज्वलः । चालः, चलः ॥ **श्याऽऽद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च** ।३।१।१४१। अवश्यायः । आत् । दायः । धायः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥ **विभाषा ग्रहः** ।३।१।१४३। व्यवस्थितविभाषेयम् । तेन जलचरे—ग्राहः । ज्योतिषि ग्रहः ॥ **गेहे कः** ।३।१।१४४। गृह्णाति धान्यादिकमिति गृहम् ॥ **शिल्पिनि ष्वुन्** ।३।१।१४५। क्रियाकौशलं शिल्पम् । तद्वति कर्तरि ष्वुन् स्यात् ॥ **षः प्रत्ययस्य** ।१।३।६। आदिरित् । नृतिखनिरञ्जिभ्य एव । नर्तकः । खनकः ॥ (**असि अकेऽने च रञ्जेर्नलोपो वाच्यः**) । रजकः । रजकी ॥ **गस्थकन्** ।३।१।१४६। गायतेस्थकन् । गाथकः ॥ **ण्युट् च** ।३।१।१४७। गायनः ॥ **प्रुसृल्वः समभिहारे वुन्** ।३।१।१४९। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः ॥ **आशिषि च** ।३।१।१५०। वुन् स्यात् । जीवतात्—जीवकः ॥ **तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत् कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥ **कर्मण्यण्** ।३।२।१। कर्मण्युपपदे धातोरण् । कुम्भं करोतीति कुम्भकारः ॥ **आतोऽनुपसर्गे कः** ।३।२।३। कर्मण्युपपदे आदन्ताद्धातोरनुपसर्गात्कः स्यान्नाऽण् । अणोऽपवादः । गोदः । कम्बलदः । अनुपसर्गे किम्? गोसंदायः ॥ (**मूलविभुजादिभ्यः कः**) । मूलानि विभुजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ॥ **सुपि स्थः** ।३।२।४। कः स्यात् ।

---

टिप्प०—१ अप्राप्तप्रार्थनमाशीः । सा च प्रयोक्तृधर्मो न प्रत्ययार्थः । २ अत्र सुविति प्रत्याहारो गृह्यते, न तु सप्तमीबहुवचनम् ।

समस्थः । विषमस्थः । सुपीति योगविभागादन्यस्मादपि । द्वाभ्यां पिबति इति द्विपः ॥ **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः** ।८।३।९७। एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः ॥ **तुन्दशोकयोः परिमृजापनुदोः** ।३।२।५। तुन्दशोकयोः कर्मणोरुपपदयो[1]राभ्यां कः ॥ **(आलस्यसुखाहरणयोरिति वक्तव्यम्)** । तुन्दपरिमृजः, अलसः । शोकापनुदः, सुखस्याहर्ता ॥ **प्रे दाज्ञः** ।३।२।६। कः स्यात् । सर्वप्रदः । पथिप्रज्ञः ॥ **समि ख्यः** ।३।२।७। गोसंख्यः ॥ **गापोष्टक्** ।३।२।८। कर्मण्युपपदे । सामगः । **(पिबतेः सुराशीध्वोरिति वाच्यम्)** । सुरापी । शीधुपी ॥ **हरतेरनुद्यमनेऽच्** ।३।२।९। अंशहरः । अनुद्यमने किम् ? भारहारः ॥ **(शक्तिलाङ्गलाङ्कुशतोमरयष्टि[2]घटघटीधनुष्षु ग्रहः)** । शक्तिग्रहः ॥ **वयसि च** ।३।२।१०। उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ॥ **आङि ताच्छील्ये** ।३।२।११। पुष्पाण्याहरति तच्छीलः पुष्पाहरः ॥ **अर्हः** ।३।२।१२। अच् स्यात् कर्मण्युपपदे । पूजार्हा ब्राह्मणी ॥ **स्तम्बकर्णयो रमिजपोः** ।३।२।१३। **(हस्तिसूचकयोरिति वक्तव्यम्)** । स्तम्बेरमो ह[3]स्ती । कर्णेजपः सूचकः ॥ **अधिकरणे शेतेः** ।३।२।१५। खे शेते खशयः ॥ **(पार्श्वादिषूपसंख्यानम्)** । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः ॥ **चरेष्टः** ।३।२।१६। अधिकरण उपपदे । कु[4]रुचरः ॥ **भिक्षासेनादायेषु च** ।३।२।१७। भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम्, आदायचरः ॥ **कृञो हे[5]तुताच्छील्यानुलोम्येषु** ।३।२।२०। एषु द्योत्येषु कृञष्टः ॥ **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य** ।८।३।४६। अत उत्तरस्यानव्ययविसर्गस्य समासे नित्यं सादेशः करोत्यादिषु ।

---

टिप्प०–१ परिमृजापनुदोरित्यत्र पञ्चम्यर्थे षष्ठीति भावः । २ घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन मद्रराज्ञीत्यत्र टज्न । ३ तत्पुरुषे कृतीति हलदन्तादिति वा ङेरलुक् । ४ कुरुषु देशेषु चरत्यटतीत्यर्थः । ५ हेतुरिह लौकिकः, नतु 'तत्प्रयोजक' इत्यनेन विहितः कृत्रिमः, केवले कृञि तदसंभवात् ।

-यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥ **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु** ।३।२।२१। एषु कृञष्टोऽहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः, भास्करः । बहुकरः । एककरः । द्विकरः । अहस्करः । धनुष्करः । अरुष्करः ॥ **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु** ।३।२।२३। एषु कृञष्टो न । शब्दकारः ॥ **स्तम्बशकृतोरिन्** ।३।२।२४। **(व्रीहिवत्सयोरिति वक्तव्यम्)** । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ॥ **हरतेर्दृतिनाथयोः पशौ** ।३।२।२५। दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः पशुः ॥ **फलेग्रहिरात्मंभरिश्च** ।३।२।२६। एतौ निपात्येते । चात्—कुक्षिंभरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । 'ज्योत्स्ना करम्भमुदरंभरयश्चकोराः' इति मुरारिः ॥ **एजेः[1] खश्** ।३।२।२८। ण्यन्तात् ॥ **अरुर्द्विषदजन्तस्य मुम्** ।६।३।६७। अरुषो द्विषतोऽजन्तस्य च मुम् खिदन्ते नत्वव्ययस्य । शित्त्वाच्छबादिः । जनमेजयतीति जनमेजयः । **(वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश्)** वातमजा मृगाः । **खित्यनव्ययस्य** ।६।३।६६। ह्रस्वः । शुनिन्धयः । तिलंतुदः ॥ शर्द्धंजहा[2] माषाः ॥ **नासिकास्तनयोर्ध्माधेटोः** ।३।२।२९। **(स्तने धेटो नासिकायां ध्मश्चेति वक्तव्यम्)** । स्तनंधयः । टित्त्वात्[3]स्तनंधयी ॥ **नाडीमुष्ट्योश्च** ।३।२।३०। ध्माधेटोः खश् । नाडिंधमः, नाडिंधयः । मुष्टिंधमः, मुष्टिंधयः ॥ **उदि कूले रुजिवहोः** ।३।२।३१। कूलमुद्रुजः । कूलमुद्वहः ॥ **वहाभ्रे लिहः** ।३।२।३२। वहः=स्कन्धः, तं लेढीति वहंलिहो गौः, अभ्रंलिहो वायुः ॥ **परिमाणे**

---

टिप्प०–१ एजेरिति ण्यन्तस्य निर्देशो न तु शुद्धस्येजा निर्देशः शित्करणाल्लिङ्गात् । तद्धि सार्वधातुकत्वे च सति शप् यथा स्यादिति । नच शुद्धस्य शपि सत्यसति वा विशेषोऽस्ति । न चोत्तरार्थं शित्त्वमिति वाच्यम् । इहार्थवत्त्वे संभवति केवलोत्तरार्थत्वस्यान्याय्यत्वात्तदेतदाह–ण्यन्तादिति । २ शर्द्धोऽपानशब्दः तं जहातीति विग्रहः । ३ अवयवे अचरितार्थत्वादिति भावः । खश्प्रत्ययान्तादेव धेटो ङीबिष्टो नान्यतः ।

पचः ।३।२।३३। प्रस्थंपचा स्थाली । खारिंपचः कटाहः ॥ **मितनखे च** ।३।२।३४। मितंपचा ब्राह्मणी । नखंपचा यवागूः ॥ **विध्वरुषोस्तुदः** ।३।२।३५। विधुंतुदः । अरुंतुदः ॥ **असूर्यललाटयोर्दृशितपोः** ।३।२।३६। असूर्यमित्यसमर्थसमासः । दृशिना नञः संबन्धात् । असूर्यंपश्या राजदाराः । ललाटंतपः सूर्यः ॥ **प्रियवशे वदः खच्** ।३।२।३८। प्रियंवदः । वशंवदः ॥ (**गमेः सुपि वाच्यः**) । मितङ्गमो हस्ती ॥ **विहायसो विह च (खच्च डिद्वा वाच्यः)** विहङ्गमः, विहङ्गः । भुजङ्गमः, भुजङ्गः ॥ **द्विषत्परयोस्तापेः** ।३।२।३९। खच् ॥ **खचि ह्रस्वः** ।६।४।९४। खचि परे णौ उपधाया ह्रस्वः । द्विषन्तं परं वा तापयतीति द्विषंतपः । परंतपः ॥ **वाचि यमो व्रते** ।३।२।४०। खच् ॥ **वाचंयमपुरंदरौ च** ।६।३।६९। वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् ? अशक्त्यादिना वाच यच्छतीति वाग्यामः ॥ **पूःसर्वयोर्दारिसहोः** ।३।२।४१। खच् । पुरं दारयतीति पुरंदरः । सर्वंसहः । भगं दारयतीति भगंदरः इति कथम् ? बाहुलकात् ॥ **सर्वकूलाभ्रकरीषेषु कषः** ।३।२।४२। सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या ॥ **मेघर्तिभयेषु कृञः** ।३।२।४३। मेघंकरः । ऋतिंकरः । भयंकरः । भयशब्देन तदन्तविधिः । अभयंकरः ॥ **क्षेमप्रियमद्रेऽण् च** ।३।२।४४। एषु कृञोऽण् चात् खच् । क्षेमंकरः, क्षेमकारः । प्रियंकरः, प्रियकारः । मद्रंकरः, मद्रकारः । कथं तर्हि अल्पारम्भाः क्षेमकरा इति ? कर्मणः शेषत्वविवक्षायां पचाद्यच् । एवं गङ्गाधरभूधरादयः ॥ **आशिते भुवः करणभावयोः** ।३।२।४५। खच् । आशितो भवत्यनेन आशितंभव ओदनः । आशितस्य भवनं आशितंभवः ॥ **संज्ञायां भृतॄवृजिधारिसहितपिदमः** ।३।२।४६। खच् । विश्वं बिभर्तीति विश्वंभरः । रथंतरं साम । शत्रुंजयो हस्ती ।

---

टिप्प०-१ खकारो मुमर्थश्चकारस्तु खचि ह्रस्व इति विशेषणार्थ इति । २ व्रतादन्यत्रातिप्रसङ्गभियात्र न खच् निपातितः । ३ यावता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते । ४ इह रथेन तरतीति व्युत्पत्तिमात्रं नत्ववयवार्थानुगमः । तत्फलं तु यस्त्वरग्रहौ 'रथंतरमाजभारा वसिष्ठः' इत्यत्र रथमित्यवगृह्णन्ति पदकाराः । कृदुत्तरपदप्रकृतिस्वरेण चान्तोदात्तत्वम् । अखण्डत्वे त्ववग्रहो न स्यात् नञ्विषयस्येत्युदात्तश्च स्यात् ।

युगंधरः पर्वतः । शत्रुसहः । शत्रुंतपः । अरिन्दमः ॥ **गमश्च** ।३।२।४७। सुतंगमः ॥ **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः** ।३।२।४८। गमेः । अन्तगः । (**सर्वत्रपन्नयोरिति वाच्यम्।**) सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः ॥ (**उरसो लोपश्च**) । उरसा गच्छतीत्युरगः ॥ (**सुदुरोरधिकरणे**) (सुखेन गच्छत्यत्र सुगः । दुर्गः । (**अन्यत्रापि दृश्यत इति वाच्यम्**) (ग्रामगः ॥ (**डे च विहायसो विहादेशो वाच्यः**) विहगः ॥ **आशिषि हनः** ।३।२।४९। (शत्रुं वध्यात् शत्रुहः। आशिषि किम् ? शत्रुघातः॥ (**दारावाहनोऽणन्तस्य च टः संज्ञायाम्**) । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः ॥ (**चारौ वा**) । चार्वाघाटः । चार्वाघातः ॥ **अपे क्लेशतमसोः** ।३।२।५०। अपपूर्वाद्धन्तेर्डः । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोपहः सूर्यः ॥ **कुमारशीर्षयोर्णिनिः** ।३।२।५१। कुमारघाती । शिरसः शीर्षभावो निपात्यते । शीर्षघाती ॥ **लक्षणे जायापत्योष्टक्** ।३।२।५२। हन्तेष्टक् स्याल्लक्षणवति कर्तरि । जायाघ्नो[2] ना । पतिघ्नी स्त्री ॥ **अमनुष्यकर्तृके च** ।३।२।५३। जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्येति किम् ? आखुघातः शूद्रः । अथ कथं बलभद्रः प्रलम्बघ्नः, शत्रुघ्नः, कृतघ्न इत्यादि ? मूलविभुजादित्वात्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादण् ॥ **शक्तौ हस्तिकपाटयोः** ।३।२।५४। हन्तेष्टक् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् ॥ **पाणिघताडघौ शिल्पिनि** ।३।२।५५। शिल्पिनि किम् ? पाणिघातः ॥ (**राजघ उपसंख्यानम्**) । राजानं हन्ति राजघः ॥ **आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्** ।३।२।५६। एषु च्व्यर्थेष्व[3]च्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम् । अच्वौ

---

टिप्प०-१ एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यादिति । २ जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति सः तां हन्तीति गौणो व्यवहारः । एवं पतिघ्नीत्यत्रापि बोध्यम् । ३ अभूततद्भावविषयेष्वित्यर्थः । ४ लिङ्गविशिष्टपरिभाषया आढ्यादिशब्देऽप्युपपदे यदा ख्युन् तदापि खित्यनव्ययस्येति ह्रस्वेन तदेव रूपम् ।

किम्? आढ्यीकुर्वन्त्यनेन॥ **कर्तरि भुवः खिष्णुच्खुकञौ** ।३।२।५७। आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः। अनाढ्य आढ्यो भवति आढ्यंभविष्णुः। आढ्यंभावुकः॥ **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्** ।३।२।६१। एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्[१]। सदिरप्रतेरिति षः। उपनिषत्। अण्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्। निवित्॥ **(अग्रग्रामाभ्यां नयतेर्णो वाच्यः)**। अग्रणीः। ग्रामणीः[२]॥ **भजो ण्विः** ।३।२।६२। अंशभाक्। प्रभाक्॥ **अदोऽनन्ने** ।३।२।६८। विट् स्यात्। आममत्तीत्यामात्। सस्यात्। अनन्ने किम्? अन्नादः। **क्रव्ये च** ।३।२।६९। अदेर्विट्। पूर्वेण सिद्धे वचनं वासरूपेति प्राप्ताण्बाधनार्थम्। क्रव्यात् आममांसभक्षकः॥ **दुहः कब् घश्च** ।३।२।७०। कामदुघा॥ **अन्येभ्योऽपि दृश्यन्ते** ।३।२।७५। मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः॥ **नेड्वशि कृति** ।७।२।८। वशादेः कृत इण् न। सुशर्मा[३]। प्रातरित्वा[४]॥ **विड्वनोरनुनासिकस्याऽऽत्** ।६।४।४१। विजायत इति विजावा। ओणृ अपनयने। अवावा। विच्। रोट्। रेट्। सुगण्॥ **क्विप् च** ।३।२।७६। अयमपि दृश्यते। उखास्रत्। पर्णध्वत्। वाहभ्रट्॥ **अन्तः** ।८।४।२०। पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत्। हे प्राण्॥ **(आशासः क्वावुपधाया इत्वं वाच्यम्)**[५]। आशीः। इत्वोत्वे। गीः। पूः। 'मो नो धातोः'। प्रतान्। प्रशान्॥ **गमः क्वौ** ।६।४।४०। अनुनासिकलोपः। अङ्गगत्॥ **(गमादीनामिति वक्तव्यम्)**। पुरीतत्। संयत्। **(ऊङ् च गमादीनामिति वक्तव्यम्)**।

---

**टिप्प०**—१ पूर्वपदादिति षत्वं तु न भवति; छन्दसीत्यनुवृत्तेः। तथाच माघः='मनःसु येन द्युसदाम्यधीयत' इति। 'आदितेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। २ 'स एषां ग्रामणीः' इति निर्देशेन ज्ञापितमेतत्। ३ सुष्ठु शृणोतीति विग्रहः। ४ प्रातः एतीति प्रातरित्वा। इणः क्वनिपि 'ह्रस्वस्य पिति' इति तुक्। ५ शासु अनुशिष्टौ, आङः शासु इच्छायाम्, अनयोरात्मनेपदे 'शास इत्–' इत्यादिना सिद्धे क्वावेवोपधाया इत्वमिति नियमार्थमिदम्। तेन आशास्ते इति सिद्धम्।

लोपश्च । अग्रेगूः । अग्रेभूः ॥ **स्थः क च** ।३।२।७७। चात्क्विप् । शंस्थः । शंस्थाः ॥ **सुप्यजातौ णिनिस्ताच्छील्ये** ।३।२।७८। अजात्यर्थे धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी ॥ **मनः** ।३।२।८२। सुपि मन्यतेर्णिनिः । दर्श-नीयमानी ॥ **आत्ममाने खश्च** ।३।२।८३। स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् चाणिनिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः[1] । पण्डितमानी ॥ **इच एकाचोऽम्प्रत्ययवच्च** ।६।३।६८। इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत्[2] खिदन्ते परे । 'औतोऽम्शसोः' । गांमन्यः । 'वाऽम्शसोः' स्त्रियंमन्यः, स्त्रीमन्यः । नॄ,— नरंमन्यः । भुवंमन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारप्रयो-गाच्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्च ॥ **भूते** ।३।२।८४। अधिकारोऽयं वर्तमाने लडिति यावत् ॥ **करणे यजः** ।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः कर्तरि । सोमेनेष्टवान् सोमयाजी ॥ **कर्मणि हनः** ।३।२।८६। पितृव्यघाती ॥ **ब्रह्मभ्रूण-वृत्रेषु क्विप्** ।३।२।८७ ब्रह्महा । भ्रूणहा । वृत्रहा । क्विप् चेत्येव सिद्धे ब्रह्मा-दिष्वेव क्विबेवेति द्विविधनियमार्थमिदम् । एवमग्रेऽपि ॥ **सुकर्मपापमन्त्रपुण्येषु कृञः** ।३।२।८९। सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ॥ **सोमे सुञः** ।३।२।९०। सोमसुत् ॥ **अग्नौ चेः** ।३।२।९१। अग्निचित्[3] ॥ **कर्मण्यग्न्याख्यायाम्** ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्, अग्न्याधारस्थलविशेषस्या-ख्यायाम्[4] । श्येन इव चितः श्येनचित् ॥ **कर्मणीनि विक्रियः** ।३।२।९३। कर्म-ण्युपपदे विपूर्वात्क्रीणातेरिनिः ॥ **(कुत्सितग्रहणं कर्तव्यम्)** । सोमविक्रयी । घृतविक्रयी ॥ **दृशेः क्वनिप्** ।३।२।९४। कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥ **राजनि युधि कृञः** ।३।२।९५। क्वनिप् । युधिरन्तर्भावितण्यर्थः । राजानं योधि-तवान् राजयुध्वा । राजकृत्वा ॥ **सहे च** ।३।२।९६। सहयुध्वा । सहकृत्वा ॥

---

टिप्प०—१ एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम् । २ अम्ग्रहणमिहावर्तते । ततः एकेन अम् विधीयते परेण प्रत्ययो विशेष्यते । ३ अत्र भूतकालस्य क्विपि नियतत्वादग्निं चितवानग्निचाय इति अणू न । ४ समुदायोऽयमाहवनी-यधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः ।

**सप्तम्यां जनेर्डः** ।३।२।९७। **तत्पुरुषे कृति बहुलम्** ।६।३।१४। ङेरलुक् । सरसिजम् । सरोजम् ॥ **उपसर्गे च संज्ञायाम्** ।३।२।९९। प्रजाः ॥ **अनौ कर्मणि** ।३।२।१००। अनुपूर्वाज्जनेः कर्मण्युपपदे डः । पुमांसमनुरुध्य जाता पुमनुजा ॥ **अन्येष्वपि दृश्यते** ।३।२।१०१। अजः । द्विजः । ब्राह्मणजः । अपि-शब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित् । परितः खाता परिखा ॥ **पञ्चम्यामजातौ** ।३।२।९८। जातिशब्दवर्जिते पञ्चम्यन्ते जनेर्डः । संस्कारजः । अदृष्टजः ॥ **क्तक्तवतू निष्ठा** ।१।१।२६। एतौ निष्ठासंज्ञौ स्तः ॥ **निष्ठा** ।३।२।१०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भाव-कर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । स्नातं मया । स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ॥ **अदो जग्धिर्ल्यप्ति किति** ।२।४।३६। ल्यपि तादौ किति च । इकार उच्चारणार्थः । जग्धम् ॥ **निष्ठायामण्यदर्थे** ।६।४।६०। ण्यदर्थो भावकर्मणी, ततोऽन्यत्र निष्ठाभ्यां क्षियो दीर्घः स्यात् ॥ **क्षियो दीर्घात्** ।८।२।४६। निष्ठातस्य नः । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया ॥ **(ऊर्णोतेर्णुवद्भावो वाच्यः)** । तेन एकाच्त्वान्नेट् । ऊर्णुतः ॥ **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** ।८।२।४२। रदाभ्यां परस्य निष्ठातस्य नो निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ,—शीर्णः । भिन्नः । छिन्नः ॥ **संयोगादेरातो धातोर्यण्वतः** ।८।२।४३। यण्वत्संयोगादेरादन्तान्निष्ठातस्य नः । द्राणः । ग्लानः ॥ **ल्वादिभ्यः** ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या,—ग्रहिज्या ॥ **हलः** ।६।४।२। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः । जीनः ॥ **(दुग्वोर्दीर्घश्च)** दु गतौ । दूनः ॥ **गु पुरीषोत्सर्गे** । गूनः ॥ **(पूञो विनाशे)** । पूना यवाः । विनष्टा इत्यर्थः । पूतमन्यत् ॥ **(सिनोतेर्ग्रासकर्मकर्तृकस्य)** । सिनो ग्रासः ।

---

टिप्प०–१ यद्यपि याज्या ऋगित्यादौ करणादावपि बाहुलकाण्ण्यद्भवति तथापि 'तयोरेव–' इति वचनाद्भावकर्मणी एव साक्षादुदात्तोऽर्थ इति स एवेह विवक्षित इति भावः । २ 'क्षि क्षये' 'क्षयो निवासे' इति द्वयोरपि ग्रहणम् । ३ ग्रासरूपं कर्म ग्रासकर्म तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः । ४ पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद्बन्धनेऽनुकूलो भवति तदा कर्मण एव कर्तृत्वमिति बोध्यम् ।

आसेति किम्? सिता पाशेन सूकरी। कर्मकर्तृकेति किम्? सितो ग्रासो देवदत्तेन॥ **ओदितश्च** ।८।२।४५। प्राग्वत्। भुजो, भुग्नः। टुओश्वि, उच्छूनः॥ **द्रवमूर्तिस्पर्शयोः श्यः** ।६।१।२४। द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम्॥ **श्योऽस्पर्शे** ।८।२।४७। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे। शीनं घृतम्। अस्पर्शे किम्? शीतं जलम्। द्रवमूर्तिस्पर्शयोरिति किम्? संश्यानो वृश्चिकः, शीतात्संकुचित इत्यर्थः॥ **प्रतेश्च** ।६।१।२५। संप्रसारणं निष्ठायाम्। प्रतिशीनः॥ **विभाषाऽभ्यवपूर्वस्य** ।६।१।२६। तथा। अभिश्यानं घृतम्। अभिशीनम्। अवश्यानः—अवशीनो वृश्चिकः। व्यवस्थितविभाषेयम्। तेनेह न—समवश्यानः॥ **अञ्चोऽनपादाने** ।८।२।४८। निष्ठातस्य नः॥ **यस्य[१] विभाषा** ।७।२।१५। यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इण् न। उदितो वेति क्त्वायां वेट्त्वादिह नेट्—समक्नः। अनपादाने किम्? उदक्तमुदकं कूपात्॥ **दिवोऽविजिगीषायाम्** ।८।२।४९। द्यूनः। विजिगीषायां[२] तु द्यूतम्॥ **निर्वाणोऽवाते** ।८।२।५०। अवाते इति च्छेदः। निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता[३] न। निर्वाणोऽग्निर्मुनिर्वा। वाते तु—निर्वातो वातः॥ **शुषः कः** ।८।२।५१। निष्ठातस्य कः। शुष्कः॥ **पचो वः** ।८।२।५२। पक्वः॥ **क्षायो मः** ।८।२।५३। क्षामः॥ **स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रात् स्त्यः संप्रसारणं निष्ठायाम्॥ **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। निष्ठातस्य मो वा। प्रस्तीमः। प्रस्तीतः। प्रात्किम्? स्त्यानः॥ **अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। एते निपात्यन्ते। ञिफला, फुल्लः। निष्ठातस्य लत्वं निपात्यते। क्तवत्वेकदेशस्यापीदं निपातनमिष्यते, फुल्लवान्। अनुपसर्गात्किम्? ॥ **आदितश्च** ।७।२।१६। आकारेतो निष्ठाया इण्न॥ **ति च** ।७।४।८९। चरफलोरत उत् तादौ किति। प्रफुल्तः। प्रक्षीवितः। प्रकृशितः। प्रोल्लाघितः॥ **(उत्फुल्लसंफुल्लयोरुपसंख्यानम्।)** ॥ **ञुँदविदोन्दत्राघ्राह्री-**

---

टिप्प०–१ यस्येत्यार्धधातुकापेक्षया षष्ठी। यदीयस्यार्धधातुकस्येत्यर्थः। २ 'विजिगीषया हि तत्राक्षाः पात्यन्त इति गम्यते विजिगीषा'। ३ एवं च वातेन हेतुना निर्वाणो दीप इत्यत्र निषेधो नेत्याहुः। ४ 'रदाभ्यां' 'संयोगादेरातो–' इति नित्ये प्राप्ते ह्री इत्यस्याप्राप्ते उभयत्र विभाषेयम्।

**श्र्योऽन्यतरस्याम्** ।८।२।५६। निष्ठातस्य नः । नुन्नः । नुत्तः । विन्नः । वित्तः । उन्दी ॥ **श्वीदितो निष्ठायाम्** ।७।२।१४। श्वयतेरीदितश्च निष्ठाया इण् न । उन्नः । उत्तः । इत्यादि ॥ **न ध्याख्यापॄमूर्च्छिमदाम्** ।८।२।५७। एभ्यो निष्ठातस्य नो न । ध्यातः । ख्यातः । पूर्तः ॥ **राल्लोपः** ।६।४।२१। राच्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये । मूर्तः । मत्तः ॥ **वित्तो भोगप्रत्यययोः** ।८।२।५८। विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे । वित्तः पुरुषः । अनयोः किम्? विन्नः ॥ **भित्तं शकलम्** ।८।२।५९। भिन्नमन्यत् ॥ **ऋणमाधमर्ण्ये** ।८।२।६०। ऋतमन्यत् ॥ **स्फायः स्फी निष्ठायाम्** ।६।१।२२। स्फीतः ॥ **इण्निष्ठायाम्** ।७।२।४७। निरः कुषो निष्ठाया इट् । यस विभाषेति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः ॥ **वसतिक्षुधोरिट्** ।७।२।५२। आभ्यां क्त्वानिष्ठयोर्नित्यमिट् । उषितः । क्षुधितः ॥ **अञ्चेः पूजायाम्** ।७।२।५३। क्त्वानिष्ठयोरिट् । अञ्चितः । गतौ तु—अक्तः ॥ **लुभो विमोहने** ।७।२।५४। क्त्वानिष्ठयोरिट्, नतु गार्ध्ये । लुभितः । गार्ध्ये तु—लुब्धः ॥ **क्लिशः क्त्वानिष्ठयोः** ।७।२।५०। इड्वा । क्लिशितः । क्लिष्टः ॥ **पूङश्च** ।७।२।५१। क्त्वानिष्ठयोरिड्वा ॥ **पूङः क्त्वा च** ।१।२।२२। निष्ठा सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । नोपधादित्यत्र हि क्त्वैव संबध्यते ॥ **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः** ।१।२।१९। सेट् किन्न । शयितः ॥ (**आदिकर्मणि निष्ठा वक्तव्या**) ॥ **आदिकर्मणि क्तः कर्तरि च** ।३।४।७१। चाद्भावकर्मणोः ॥ **विभाषा भावादिकर्मणोः** ।७।२।१७। आदितो निष्ठाया इड्वा । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । ञिष्विदेति भ्वादिरत्र गृह्यते ; मीङ्भिः साहचर्यात् । स्विदतेस्तु 'स्विदित' इत्येव । ञिमिदा ञिक्ष्विदा

---

टिप्प०—१ अधमं दुःखप्रदमृणं यस्य सोऽधमर्णः, तस्य भाव आधमर्ण्यं तेन व्यवहारविशेषो लक्ष्यते । स व्यवहारो दातृग्रहीत्रोः संबन्धो भवतीत्युत्तमर्णेऽपि प्रयोगो न विरुध्यते । लक्षणायां तु धारेरुत्तमर्ण इति निर्देशो लिङ्गम् । २ आद्येषु क्षणेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् । आदिकर्मणि क्तस्य कर्तरि विधानार्थं चेत्याहुः । तक्रकौण्डिन्यन्यायेन भावकर्मणोर्बाधो मा भूदिति चकारः ।

दिवादी भ्वादी च। प्रमेदितः। प्रक्ष्वेदितः। प्रधर्षितः। धर्षितं तेन। सेट् किम्? प्रस्विन्नः। प्रस्विन्नं तेन–इत्यादि॥ **मृषस्तितिक्षायाम्**।१।२।२०। सेण् निष्ठा किन्न। मर्षितः। तितिक्षायां किम्? अपमृषितं वाक्यम्, अविस्पष्टमित्यर्थः॥ **उदुपधाद्भावादिकर्मणोरन्यतरस्याम्** ।१।२।२१। उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न। द्युतितम्, द्योतितम्। मुदितम्, मोदितं साधुना। प्रद्योतितः, प्रद्युतितः। प्रमुदितः, प्रमोदितः साधुः। उदुपधात्किम्? विदितम्। भावेत्यादि किम्? रुचितं कार्षापणम्। सेट् किम्? कुष्टम्। शब्विकरणेभ्य एवेष्यते। नेह–गुध्यते-र्गुधितम्॥ **निष्ठायां सेटि**।६।४।५२। णेर्लोपः। भावितः। भावितवान्॥ **दृढः स्थूलबलयोः**[1] ।७।२।२०। स्थूले बलवति च निपात्यते॥ **दधातेर्हिः**[2] ।७।४।४२। तादौ किति। निहितम्॥ **दो दद्घोः** ।७।४।४६। घुसंज्ञस्य दा इत्यस्य दथ्[3] तादौ किति। चर्त्वम्। दत्तः॥ **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** ।३।४।७२। एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितः॥ **द्यतिस्यतिमास्थामित्ति किति** ।७।४।४०। एषामित्तादौ किति। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः। राममनुजातः। गरुडमारूढः। विश्वमनुजीर्णः। पक्षे–प्राप्ता गङ्गा येनेत्यादि॥ **क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** ।३।४।७६। एभ्योऽधिकरणे क्तः। चाद्यथा–प्राप्तम्॥ मुकुन्दस्यासितमिदमिदं यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥ १॥ पक्षे–आसेरकर्मकत्वात्कर्तरि भावे च–आसितो मुकुन्दः, आसितं तेन॥ (**गत्यर्थेभ्यः कर्तरि कर्मणि च**) रमापतिरिदं यातः, तेनेदं यातम्। भुजेः कर्मणि–अनन्तेनेदं भुक्तम्। 'वर्तमाने' इत्यधि-

---

टिप्प०–१ बलमस्यास्तीति बलः, अर्शआदित्वादच्। तदाह–बलवतीति। स्थूलो मांसलः। स च निर्बलोऽपि बलवान् कृशोऽपि दृढ इति फलितोऽर्थः। २ श्तिपा निर्देशो धेटो निवृत्त्यर्थः ३ इहादेशस्थान्त एव न तु तदधान्तः। जश्त्वे कृते संहितायास्तुल्यत्वेऽपि प्रक्रियाया दोषात्। तान्ते दीर्घत्वाख्यो दोषः। दान्ते निष्ठानत्वम्। धान्ते दोषो धत्वाख्यः। निर्दोषत्वात्थान्तो ग्राह्य इति भावः।

कृत्य ॥ **ञीतः क्तः** ।३।२।१८७। क्ष्विण्णः ॥ **[1]मतिबुद्धिपूजार्थेभ्यश्च** ।३।२।१८८। राज्ञां मतः—इ[2]ष्टः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । 'शीलितो रक्षितः क्षान्तो आक्रुष्टो जुष्ट इत्यपि' इत्यादि ॥ **नपुंसके भावे क्तः** ।३।३।११४। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः । जल्पितं । हसितम् ॥ **सुयजोर्ङ्वनिप्** ।३।२।१०३। भूते । सु[3]त्वा । यज्वा ॥ **जीर्यतेरतृन्** ।३।२।१०४। जरन् । जरन्तौ । वासरूपन्यायेन निष्ठापि । जीर्णः । जीर्णवान् ॥ **छन्दसि लिट्** ।३।२।१०५। **लिटः कानज्वा** ।३।२।१०६। **क्वसुश्च** ।३।२।१०७। भूतसामान्ये छन्दसि लिट् । तस्य कानच्क्वसू वा स्तः । 'तङानावात्मनेपदम्' । चक्राणः । 'म्वोश्च' । जगन्वान् । कवयस्तु बाहुलकाल्लोकेऽपि प्रयुञ्जते । 'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि ॥ **वस्वेकाजाद्घसाम्** ।७।२।६७। कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषाम् । आदिवान् । आरिवान् । ददिवान् । जक्षिवान् । एषां किम्? बभूवान् ॥ **भाषायां सदवसश्रुवः** ।३।२।१०८। सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात्, तस्य च नित्यं क्वसुः । 'निषेदुषी मासनबन्धधीरः' 'अध्यूषुषस्तामभवज्जनस्य' । शुश्रुवान् ॥ **उपेयिवाननाश्वाननूचानश्च** ।३।२।१०९। एते निपात्यन्ते । उपपूर्वादिणो लिड् वा, तस्य क्वसुः । इट्, उपेयिवान् । नात्रोपसर्गस्तन्त्रम् । ईयिवान् । नञोऽश्नातेः क्वसोरिडभावश्च[4] । अनश्वान् । अनोर्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः ॥ **लटः शतृशानचावप्रथमासमानाधिकरणे** ।३।२।१२४। अप्रथमान्तेन सामानाधिक[5]रण्ये लट एतौ वा स्तः । शबादि, प[6]चन्तं चैत्रं पश्य ॥ **आने मुक्** ।७।२।८२। अङ्गस्यातः । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने

टिप्प०—१ मतिरिहेच्छा बुद्धेः पृथगुपादानात् । २ 'तीषसहे'ति वेट्त्वाद्यस्य विभाषेति नेट् । ३ षुञ् अभिषवे । यद्यपीह षु गतौ षु प्रसवैश्वर्ययोरिति निरनुबन्धकग्रहणं न्याय्यं तथाप्यनभिधानादुभयपदिना साहचर्याद्वा तयोर्ग्रहणं न । ४ 'धृतजयधृतेरनाशुषः' इति भारविः । ५ यद्यप्यादेशरहितस्य लटः प्रयोगाभावात्सामानाधिकरण्यं दुर्लभं तथापि शतृशानचोस्तद्दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्प्यते । ६ विक्लित्त्यनुकूलवर्तमानव्यापाराश्रयमित्यर्थः ।

पुनर्लङ्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित्। सन्द्विजः॥ **ईदासः** ।७।२।८३। आनस्य। 'आदेः परस्य' आसीनः ॥ **विदेः शतुर्वसुः** ।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा। विद्वान्, विदन् ॥ **तौ सत्** ।३।२।१२७। तौ शतृशानचौ सत्संज्ञौ स्तः ॥ **लृटः सद्वा** ।३।३।१४। करिष्यन्तं करिष्यमाणं पश्य ॥ **ताच्छील्यवयोवचनशक्तिषु चानश्** ।३।२।१२९। अग्नौ जुह्वानः। कवचं बिभ्राणः। शत्रुं निघ्नानः॥ **आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन्** ।३।२।१३५। कर्ता कटान्॥ **स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** ।३।२।१५८। आद्यास्त्रयश्चुरादावदन्ताः। स्पृहयालुः॥ (**शीङो वाच्यः**)। शयालुः॥ **अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्** ।३।२।१३६। अलंकरिष्णुः॥ **ग्लाजिस्थश्च ग्स्नुः** ।३।२।१३९। गिदयं नतु कित्। तेन स्थ ईत्वं न। ग्लास्नुः। गित्वान्न गुणः। जिष्णुः। स्थास्नुः। चाद्भुवः। श्रुकः कितीत्यत्र गकारप्रश्लेषान्नेट्। भूष्णुः॥ **त्रसिगृधिधृषिक्षिपेः क्नुः** ।३।२।१४०। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः ॥ **शमित्यष्टाभ्यो घिनुण्** ।३।२।१४१। उकार उच्चारणार्थ इति काशिका। अनुबन्ध इति भाष्यम्। तेन शमिनितरा शिमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः। नचैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः। झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात्। नोदात्तोपदेशस्येति वृद्धिनिषेधः। शमी। तमीत्यादि ॥ **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** ३।२।१४२। घिनुण् स्यात्। संपर्कीत्यादि॥ **वौ कषलसकत्थस्रम्भः** ।३।२।१४३। विकाषी॥ **अपे च लषः** ।३।२।१४४। चाद्वौ। अपलाषी। विलाषी॥ **चलनशब्दार्थादकर्मकाद्युच्** ।३।२।१४८। चलनार्थाच्छब्दार्थाच्च युच् स्यात्। चलनः[2]।

---

टिप्प०—१ चानशो लादेशत्वाभावेनात्मनेपदत्वाभावात्परस्मैपदिभ्योऽपि विधानमिति ध्वनयन्नुदाहरति। २ चल कम्पने।

चोपनः[1]। कम्पनः[2]। शब्दनः[3]। रवणः[4]। अकर्मकात्किम्? पठिता विद्याम् ॥ **अनुदात्तेतश्च हलादेः** ।३।२।१४९। अकर्मकाद्युच् । वर्तनः । वर्धनः । अनुदात्तेतः किम्? भविता । हलादेः किम्? एधिता । अकर्मकात्किम्? वसिता वस्त्रम् ॥ **निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्** ।३।२।१४६। एभ्यो वुञ् । निन्दकः । हिंसक इत्यादि ॥ **देविक्रुशोश्चोपसर्गे** ।३।२।१४७। आदेवकः । आक्रोशकः । उपसर्गे किम्? देवयिता । क्रोष्टा ॥ **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्** ।३।२।१५४। लाषुकः । पातुकः ॥ **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ।३।२।१५५। जल्पाकः ॥ **सनाशंसभिक्ष उः** ।३।२।१६८। चिकीर्षुः । आशंसुः । भिक्षुः ॥ **स्थेशभासपिसकसो वरच्** ।३।२।१७५। स्थावरः, भास्वरः इत्यादि ॥ **यश्च यङः** ।३।२।१७६। यातेर्यङन्ताद्वरच् । अतो लोपः । तस्याचः परस्मिन्निति स्थानिवद्भावे प्राप्ते ॥ **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु** ।१।१।५८। पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । इति यलोपं प्रति स्थानिवत्त्वनिषेधाल्लोपो व्योर्वलीति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्याल्लोपे प्राप्ते ॥ **( वरे लुप्तं न स्थानिवत् )** यायावरः ॥ **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्**[5] ।३।२।१७७। विभ्राट् । भाः । धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्यापकर्षणाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् ॥ **( क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च )**[6] वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिमिति श्रीः[9] ॥ **( ध्यायतेः संप्रसारणं च )** । धीः ॥ **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** ।३।२।१८२। दाबादेः ष्ट्रन् करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ॥ **तितुत्रतथसिसुसरकसेषु**

---

टिप्प०–१ चुप मन्दायां गतौ । २ कपि संचलने । ३ शब्द शब्दने चुरादिः । ४ रु शब्दे । 'युवोः–' इत्यनादेशः । ५ इह सूत्रे विनाशेति विपूर्वस्य नशेः ण्यन्तस्य भाविना णिलोपेन निर्देशः । अकारस्त्वागन्तुकः । ६ आ क्वेरित्युक्तत्वात्तच्छीलादिष्वयं क्विप् । ७ औणादिकमिदं सूत्रम् । ८ अत्र दीर्घः संप्रसारणाभावश्च । प्राप्तिस्तु 'वचिस्वपि', 'ग्रहिज्या–' इत्यादिना । ९ प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाहृतस्तत्र 'कर्तरि कृदि'ति सूत्रविरोधः स्पष्ट एव ।

च ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम्[1] । पत्रम् । दंष्ट्रा । नद्ध्री[2] ॥ **हलसूकरयोः पुवः** ।३।२।१८३। पूङ्पूञोः करणे ष्ट्रन् । तच्चेत्करणं[3] हलसूकरयोरवयवः । हलस्य सूकरस्य वा—पोत्रम्, मुखमित्यर्थः[4] ॥ **अर्तिलूधूसूखनसहचर इत्रः** ।३।२।१८४। अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥ **पुवः संज्ञायाम्** ।३।२।१८५। **पवित्रम्** ॥

## अथोणादयः ।

**कृवापाजिमिस्वदिसाध्यशूभ्य उण्** । करोतीति कारुः । वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । अश्नुते—आशु शीघ्रम् । **हरिमितयोर्द्रुवः** । द्रु गतौ । अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवतीति मितद्रुः समुद्रः । **शते च** । शतधा द्रवतीति शतद्रुर्नदीभेदः । **अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः** । एते कूप्रत्ययान्ता निपात्यन्ते । **शमेर्ढः** । बाहुलकात् इत्संज्ञा ढस्य एयादेश इट् च न भवति । 'शण्ढः स्यात्पुंसि गोपतौ' । शण्ढः । **कमेरठः** । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी । **रमेर्वृद्धिश्च** । रामठं हिङ्गु । **शमेः खः** । शङ्खः । **कणेष्ठः** । कण्ठः । **अमन्ताड्डः** । अमिति प्रत्याहारः । 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः । 'रण्डा मूषिकपर्ण्यां च विधवायां च योषिति' इति मेदिनी । 'खण्डोऽस्त्री नेक्षुविकारमणिभेदयोः' इति मेदिनी । मन ज्ञाने । 'मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु वस्तुनि' । इति मेदिनी । **पतिचण्डिभ्यामालञ्** । 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी । चण्डालो मातङ्गः । प्रज्ञादित्वादणि चाण्डालोऽपीत्युज्ज्वलदत्तः । तन्न ; 'कुलालवरुडकर्मारनिषादचण्डालमित्राऽमित्रेभ्यश्छन्दसि' इति चण्डालशब्दात्स्वार्थे णं विदधता वार्तिकेन तद्भाष्येण च सह विरोधात् । **गन्गम्यद्योः** । गङ्गा । अद्गः

---

टिप्प०—१ हो ढः धत्वष्टुत्वढलोपाः । २ 'नहो धः' इति धत्वम् । ३ एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तम् । ४ तत्रैव रूढिरिति भावः । ५ धू विधूनने इति कुटादिरेव गृह्यते; निरनुबन्धकत्वात् । अत एव 'गाङ्कुटा—' इति ङित्वाद्गुणनिषेधे उवङ् ।

पुरोडाशः। **भृञः किन् नुट् च**। भृञो गन्कित्स्यात्तस्य नुट् च। 'भृङ्गाः षिड्गाऽलिधूम्याटाः'। **शृणातेर्ह्रस्वश्च**। शृङ्गम्। **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियाक्षिनीभ्यो मन्**। एभ्यश्चतुर्दशभ्यो मन्। अर्मश्चक्षूरोगः। स्तोमः। संघातः सोमः। होमः। सर्मो गमनम्। धर्मः। क्षेमं कुशलम्। क्षौमम्। भाम आदित्यः। यामः। वामः शोभनदुष्टयोः। पद्मम्। यक्ष्मो रोगराजः। नेमः। **अवतेष्टिलोपश्च**। मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः। अन्यथा डिदित्येव ब्रूयात्। **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** ।६।४।२०। एषामुपधावकारयोरूठ् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्तते। अवतेस्तुनि कृते ओतुरिति दर्शनात्। स्वरादिपाठादव्ययत्वम्। अवतीति आम्। **ग्रसेरा च**। ग्रासः॥ **अविसिविसिशुषिभ्यः कित्**। एभ्यो मन्। ऊमं नगरम्। स्यूमो रश्मिः। सिमः सर्वः। शुष्ममग्निसमीरयोः। **घर्मः**। घृधातोर्निपातोऽयम्। **ग्रीष्मः**। ग्रसतेर्निपातोऽयम्॥ **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्**। अश्वः। 'पुष्वः स्याद्दतुसूर्ययोः'। लट्वा पक्षिभेदः फलं च। कण्वं पापम्। खट्वा। विश्वम्। **कनिन् युवृषितक्षिराजिधान्विद्युप्रतिदिवः**। यौति इति युवा। वृषा इन्द्रः। तक्षा राजा। धन्वा मरुः। धन्व शरासनम्। द्युवा सूर्यः। प्रतिदीव्यत्यस्मिन् प्रतिदिवा दिवसः। **उषिकुषिगार्तिभ्यः स्थन्**। ओष्ठः। कोष्ठम्। गाथा। अर्थः 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। **पातृतुदिवचिरिचिसिचिभ्यस्थक्**। 'पीथो रविर्घृतं पीथम्'। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्' इति विश्वः। तुत्थोऽग्निः। उक्थं सामभेदः। रिक्थम्। बाहुलकाद्वचेरपि—'रिक्थमृक्थं धनं वसु'। सिक्थम्। **ग्लानुदिभ्यां डौः**। ग्लौः। नौः। **क्विपरयम्**। डौरित्येव। ग्लौ करोति। 'कृन्मेजन्तः' इति सिद्धे नियमार्थमिदम्—उणादिप्रत्ययान्तश्चैजन्त एवेति। **गमेर्डोः**। 'गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' इति। बाहुलकाद् द्युतेरपि डोः। 'द्यौः स्त्री स्वर्गान्तरिक्षयोः'॥ **रातेर्डैः**। राः। **भ्रमेश्च डूः**। भ्रूः। चाद्गमेः, अग्रेगूः। **उन्देर्नलोपश्च**। चाद्युच्। ओदनः। **गमेर्गश्च**। चाद्युच्।

गगनम्। **कॄपॄवृजिमन्दिनिधाञः क्युः** । किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनं कुलनाशयोः । **धृषेर्धिष् च संज्ञायाम्** । धिषणो गुरुः । धिषणा धीः । **तन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** । शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः, तौ चाऽनिटौ । शंस्ता । शंस्तारौ । शंस्तारः । क्षदिः सौत्रो धातुः । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वेश्यायामपि शूद्रजे' । **बहुलमन्यत्रापि** । मन्, मन्ता । हन्, हन्ता । इत्यादि । **नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ** । एते तृजन्ता निपात्यन्ते । नप्ता । इत्यादि । **सुञ्यसेर्ऋन्** । स्वसा । **यतेर्वृद्धिश्च** । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' । **नञि च नन्देः** । न नन्दतीति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके । 'ननान्दा तु स्वसा पत्युर्ननान्दा नन्दिनी च सा' इति शब्दार्णवः । **दिवेर्ऋः** । देवा देवरः । 'स्वामिनो देवृदेवरौ' । **नयतेर्डिच्च** । ना । नरौ । नरः । **अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः** । अर्चिः 'अर्चिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः' । हविः सर्पिः । **इस्मन्त्रन्क्विषु च** ।६।४।९७। छर्दिः ह्रस्वः स्यात् । छदिः पटलं । छर्दिः । **बृंहेर्नलोपश्च** । 'बर्हिर्ना कुशशुष्मणोः' । **द्युतेरिसिन्नादेश्च जः** । ज्योतिः । **जनेरुसिः** । 'जनुर्जननजन्मानि' इत्यमरः । **अर्तिपॄवपियजितनिधनितपिभ्यो नित्** अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । धनुः । धनुरस्त्रियाम् । 'तपुः सूर्याग्निशत्रुषु' । **एतेर्णिच्च** । आयुः, आयुषी । **चक्षेः शिच्च** । चक्षुः । **मुहेः किच्च** । मुहुः । मुहुरव्ययम् । **पानीविषिभ्यः पः** । पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्तापः । नेपः पुरोहितः । वेष्पः पानीयम् । **स्तुवो दीर्घश्च** । स्तूपः समुच्छ्रायः । **सुशॄभ्यां निच्च** । चात्कित् । सूपः । बाहुलकादूत्त्वम् । शूर्पः । **कुयुभ्यां च** । कुवन्ति मण्डूका अस्मिन्निति कूपः । युवन्ति बध्नन्ति अस्मिन्पशुमिति यूपः । **खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः** । सप्तैते पप्रत्ययान्ता निपात्यन्ते । **स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्** । अयामन्तेति णेरय् । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुः वावदूकः । मदयित्नुः मदिरा । **अशेः सरः** । अक्षरम् । **वसेश्च** । वत्सरः । **संपूर्वाच्च** । संवत्सरः । परिवत्सरः । **कृशॄशलिकलि-**

**गर्दिभ्योऽभच्** । करभः । शरभः । शलभः । कलभः करिशावकः । गर्दभः । **ऋषिवृषिभ्यां कित्** । ऋषभः । वृषभः । **रासिवल्लिभ्यां च** । रासभः । वल्लभः । **नियो मिः** । नेमिः । **अर्तेरूच्च** । ऊर्मिः । **भुवः कित्** । भूमिः । **अङ्गेर्नलोपश्च** । अग्निः । **वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** । वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । **पातेर्डतिः** । पतिः । **सूङः क्रिः** । सूरिः । **अदिशदिभूशुभिभ्यः क्रिन्** । अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिः ब्रह्मा । **वलिमलितनिभ्यः कयन्** । वलयः । मलयः । तनयः । **माछाससिभ्यो यः** । माया । छाया । सस्यम् । बाहुलकात्सव्यं दक्षिणवामयोः । **जनेर्यक्** । 'ये विभाषा' । जन्यं युद्धम् । जाया भार्या । **सर्वधातुभ्य इन्** । पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । काशत इति काशिः । यतिः । मल्लिः, मल्ली । केलिः । 'मसी परिणामे' । मसिः । बोधिः । नन्दिः । कलिः ॥ 'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवंगे च यमे वाते च कीर्तितः' इति । **इगुपधात्कित्** । ऋषिः । शुचिः । **मनेरुच्च**[१] । मुनिः । **जनिघसिभ्यामिण्** । जनिर्जननम् । घासिर्भक्ष्यमग्निश्च । **अच इः** । रविः । तरिः । पविः । कविः । अविः । **कुडिकम्प्योर्नलोपश्च** । कुडिर्देहः । कपिः । **इषेः क्सुः** । इक्षुः । **कृषेर्वर्णे** । नक् स्यात् । कृष्णः । **दाभाभ्यां नुः** । दानुः दाता । भानुः । **विषेः किच्च** । विष्णुः । **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** । सेतुः । तन्तुः । जन्तुः । गन्तुः । मस्तु दधिमण्डम् । सक्तुः । ओतुः । धातुः । क्रोष्टा । **अवितृस्तृतन्त्रिभ्य ईः** । अवीर्नारी रजस्वला । तरीः । स्तरीः । तन्त्रीः । **यापोः किद्द्वे च** । ययीरश्वः । 'पपीः स्यात्सोमसूर्ययोः' । **वातप्रमीः** । निपातोऽयम् । **लक्षेर्मुट् च** । लक्ष्मीः । **सर्वधातुभ्यो मनिन्** । कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम । **बृंहेर्नोऽच्च** । नकारस्य अकारः । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' । **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्**[२] ।

---

टिप्प०–१ मन ज्ञाने असादिन् स्यात्स च कित् अकारस्योकारादेशश्च । मन्यते जानातीति मुनिः । 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी । २ धामन् इति क्वचित् पाठः ।

सप्तैते निपात्यन्ते । **साऽतिभ्यां मनिन्मनिणौ** । साम । आत्मा । **हनिमशिभ्यां सिकन्** । 'हंसिका हंसयोषिति' । मक्षिका । **गिरे**[१] **उडच्** । गरुडः । **शृदृभसोऽदिः** । शरत् । 'शरद्धृदयकूलयोः' । भसज्जघनम् । **त्यजितनियजिभ्यो डित्** । त्यद् तद् यद् । **एतेस्तुट् च** । एतद् । **युष्यसिभ्यां मदिक्** । त्वम् । अहम् । **इन्देः कमिन्नलोपश्च** । इदम् । **कायतेर्डिमिः** । किम् । **सर्वधातुभ्यः**[२] **ष्ट्रन्** । वस्त्रम् । अस्त्रम् । शास्त्रम् । **अमिचिमिदिशसिभ्यः क्त्रः** । आम्रम् । चित्रम् । मित्रम् । शस्त्रम् । **पुवो ह्रस्वश्च** । पुत्रः । **स्त्यायतेर्ड्रट्**[३] । स्त्री । **सूचेः स्मन्** । सूक्ष्मम् । **पातेर्डुम्सुन्** । पुमान् । **वसेस्तिः** । 'वस्तिर्नाभेरधो द्वयोः' । **सावसेः** । स्वस्ति । **वौ तसेः** । 'वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । **सर्वधातुभ्योऽसुन्** । चेतः । सरः । पयः । सदः इत्यादि । **अशेर्देवने युट् च** । देवने स्तुतौ । यशः । **उब्जेर्बले बलोपश्च** । ओजः । **श्रयतेः स्वाङ्गे शिरः किच्च** । श्रयतेः शिर आदेशोऽसुन्किच्च । शिरः । **अर्तेरुच** । उरः । **भूरञ्जिभ्यां कित्** । भुवः । रजः । **वसेर्णिच्च** । वासो वस्त्रम् । **चन्देरादेश्च छः**[४] । छन्दः । **पचिवचिभ्यां सुट् च** । 'पक्षसी तु स्मृतौ पक्षौ' । वक्षः । **नञि हन एह च** । अनेहाः । अनेहसौ । **विधाञो वेध च** । वेधाः । **चन्द्रे मो डित्** । चन्द्रोपपदान्माङोऽसिः स च डित् । चन्द्रमाः । **उषः कित्** । उषः । **सर्तेरप्पूर्वादसिः** । अप्सराः प्रायेणाऽयं भूम्नि, अप्सरसः । **वसेः कनसिः** । उशनाः । **अदिभुवो डुतच्**[५] । अद्भुतम् । **गुधेरूमः**[६] । गोधूमः ।

---

टिप्प०-१ गॄ निगरणे । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपे गरुडशब्दं क्लेशेन व्युत्पादयन्ति । २ दशपाद्यां तु अर्थात् सर्वधातुभ्यो भविष्यतीत्याशयेन ष्ट्रन्नित्येन सूत्रितम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । ३ ष्ट्यैस्त्यै शब्दसंघातयोः । डित्त्वाट्टिलोपः । लोपो व्योरिति यलोपः । टित्त्वान्ङीप् । ४ चदि आह्लादे । अस्मादसुन् आदेश्छकारश्च । 'छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी । अकारान्तोऽप्ययम् । 'छन्दावभिप्रायवशौ' इत्यमर-द्विरूपकोशौ । ५ अदित्यव्ययम् । आकस्मिकार्थेऽस्मिन्नुपपदे भूधातोर्डुतच् । डित्वाट्टिलोपः । अद्भुतमाश्चर्यम् । ६ गुध परिवेष्टने । गुध्यते परिवेष्ट्यते प्राणिभिरिति विग्रहः ।

तृहेः क्नो हलोपश्च । तृणम् । उदि चेर्डैसिः । उच्चैः । नौ दीर्घश्च । नीचैः । पूञो यण्णुक् ह्रस्वश्च । यत्प्रत्ययः । पुण्यम् । उदि दृणातरजलौ पूर्वपदान्त्यलोपश्च । उदरम् । डित्खनेर्मुट् स चोदात्तः । अच् अल् च डिद्धातोर्मुट् । मुखम् । अमेः सन् । अंसः । मुहेः खो मूर्च । मूर्खः । नहेर्हलोपश्च । नखः । शीङो ह्रस्वश्च । शिखा । माङ ऊखो मय् च । मयूखः । जनेष्टन् लोपश्च । जटा । क्लिशेरन् लो लोपश्च । केशः । फलेरितजादेश्च पः । पलितम् । कृञादिभ्यः संज्ञायां वुन् । करकः, कटकः । नरकः, नरकम् । 'नरको नारकोऽपि च' इति द्विरूपकोशः । चीकयतेराद्यन्तविपर्ययश्च । कीचकः । जनेररष्ठ च । जठरम् । हर्यतेः कन्यन् हिरच् । हिरण्यम् । कृञः पासः । कर्पासः । विल्वादित्वात्कार्पासम् । ऊर्णोतेर्डः । ऊर्णा । दधातेर्यत् नुट् च । धान्यम् ॥ चतेरुरन् । चत्वारः । प्रातेररन् । प्रातः । अमेस्तुट् च । अन्तः । दहेर्गो लोपो दश्च नः । दहेर्गप्रत्ययो धातोरन्त्यस्य लोपो दस्य नः । नगः । हन्तेरच् घुर च । घोरम् । तरतेर्ड्रिः । त्रयः, त्रीन् । ग्रहेरनिः । ग्रहणिः । प्रथेरमच् । प्रथमः । चरेश्च । चरमः । मङ्गेरलच् । मङ्गलम् । इत्युणादिः ॥

## अथोत्तरकृदन्तम्

उणादयो बहुलम् ।३।३।१। एते वर्तमाने[1] संज्ञायां च बहुलं स्युः । केचिदविहिता[2] अप्यूह्याः । "संज्ञासु[3] धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु" ॥ दाशगोघ्नौ संप्रदाने ।३।४।७३। एतौ निपात्यते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नः अतिथिः ॥ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।३।३।१०। क्रियार्थायां[4] क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको[5] याति ॥ कालसमयवेला-

---

टिप्प०-१ 'वर्तमाने लट्' इत्यतो वर्तमानग्रहणं पुवः संज्ञायामित्यतः संज्ञाग्रहणं चानुवर्तते । २ हृतेरुलच्विहितः, स तु शङ्केरपि भवति शङ्कुलेति प्रयोगदर्शनात् । ३ अनादिसंज्ञास्वेव, नतु सर्वास्वित्यर्थः । हृतेरुलच्प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते । ४ क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था । ५ कृष्णकर्मकभविष्यद्दर्शनकर्तृकं दर्शनप्रयोजनकं यानमित्यर्थः ।

**तुमुन्** ।३।३।१६७। कालः समयो वेला अनेहा वा भोक्तुम् ॥ **भावे** ।३।३।१८। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ॥ **अकर्तरि च कारके संज्ञायाम्** ।३।३।१९। कर्तृभिन्ने कारके घञ् ॥ **घञि च भावकरणयोः** ।६।४।२७। रञ्जेर्नलोपः । रागः । अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** ।३।३।४१। एषु चिनोतेर्घञ्, आदेश्च कः। उपसमाधानं राशीकरणम् । निकायः । आकायः[1] । कायः । गोमयनिकायः ॥ **एरच्** ।३।३।५६। इवर्णान्तादच् चयः ॥ **ऋदोरप्** ।३।३।५७। ऋदन्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः । घञर्थे कविधानम् । प्रस्थः । विघ्नः ॥ **ड्वितः क्त्रिः** ।३।३।८८। भावे स्वभावात् ॥ **क्त्रेर्मम् नित्यम्** ।४।४।२०। क्त्रिप्रत्ययान्तान्मप् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् । उप्त्रिमम् ॥ **ट्वितोऽथुच्** ।३।३।८९। अयमपि भावे । टुवेपृ कम्पने । वेपथुः । श्वयथुः । **यजयाचयतविच्छप्रच्छरक्षो नङ्**[2] ।३।३।९०। यज्ञः । याच्ञा । यत्नः । विश्नः[3] । प्रश्नः । रक्ष्णः ॥ **स्वपो नन्** ।३।३।९१। स्वप्नः ॥ **उपसर्गे घोः किः** ।३।३।९२। प्रधिः । उपाधिः ॥ **स्त्रियां क्तिन्** ।३।३।९४। स्त्रीलिङ्गे भावादौ क्तिन् । घञोऽपवादः । कृतिः । स्तुतिः । (**ऋल्वादिभ्यः क्तिन्निष्ठावद्वक्तव्यः**) । तेन नत्वम्, कीर्णिः । गीर्णिः । धूनिः । लूनिः । पूनिः ॥ (**संपदादिभ्यः क्विप्**) । सम्पत्, विपत् । आपत् । क्तिन्नपीष्यते । संपत्तिः । विपत्तिः । आपत्तिः ॥ **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** ।३।३।९७। एते निपात्यन्ते ॥ **कृञः** ।३।३।९९। क्यप् । कृत्या ॥ **श च** ।३।३।१००। कृञः शः[4] । चात् क्तिन् । प्रकरणम् । प्रक्रिया । कृतिः ॥ **इच्छा** ।३।३।१०१। इषेर्निपातोऽयम् ॥ **अ प्रत्ययात्** ।३।३।१०२। प्रत्य-

---

टिप्प०—१ आचीयन्तेऽस्मिन्निष्टका इत्याकायः । अधिकरणे घञ् । अग्निस्थलविशेषस्य संज्ञा । २ भावेऽकर्तरि कारके चेति वर्तते । अत एव 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र इज्यते यज्ञ इति व्याचक्षते । ३ 'छ्वोः शूडनुनासिके च' इति शः । ४ यदा भावकर्मणोः शः, तदा 'सार्वधातुके यक्'. 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः । अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम् ।

यान्तेभ्यः स्त्रियामकारप्रत्ययः । चिकीर्षा । पुत्रकाम्या ॥ **गुरोश्च हलः** ।३।३।१०३। गुरुमतो हलन्तात्स्त्रियामप्रत्ययः । ईहा । ऊहा ॥ **षिद्भिदादिभ्योऽङ्** ।३।३।१०४। जॄष्, 'ऋदृशोऽङि गुणः' । जरा । त्रपूष्, त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । (**कृपेः संप्रसारणं च**)। कृपा ॥ **आतश्चोपसर्गे** ।३।३।१०६। अङ् स्यात् । उपदा । अन्तर्द्धा ॥ **ण्यासश्रन्थो युच्** ।३।३।१०७। अस्यापवादः । कारणा ॥ **रोगाख्यायां ण्वुल् बहुलम्** ।३।३।१०८। प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न,—शिरोर्तिः । (**धात्वर्थनिर्देशे ण्वुलवक्तव्यः**) आसिका ॥ (**इक्श्तिपौ धातुनिर्देशे**)। पचिः, पचतिः । (**वर्णात्कारः**) निर्देश इत्येव । अकारः । ककारः । (**रादिफः**)। रेफः ॥ **नपुंसके भावे क्तः** ।३।३।११४। **ल्युट् च** ।३।३।११५। हसितम्, हसनम् ॥ **करणाधिकरणयोश्च** ।३।३।११७। ल्युट् । अनुमानः । अनुमानी ॥ **पुंसि संज्ञायां घः प्रायेण** ।३।३।११८। **छादेर्घेऽद्व्युपसर्गस्य** ।६।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे । दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ॥ **अवे तॄस्त्रोर्घञ्** ।३।३।१२०। अवतारः । अवस्तारो जवनिका ॥ **हलश्च** ।३।३।१२१। हलन्ताद्घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिकमित्यपामार्गः ॥ **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ।३।३।१२६। एषु दुःखसुखार्थेषूपपदेषु खल् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे—दुष्करः कटो भवता । अकृच्छ्रे—ईषत्करः । सुकरः ॥ **आतो युच्** ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ **आवश्यकाधमर्ण्ययोर्णिनिः** ।३।३।१७०। अवश्यंकारी । शतंदायी ॥ **कृत्याश्च** ।३।३।१७१। तथा धातोः । अवश्यं हरिः सेव्यः । शतं देयम् ॥ **क्तिच्क्तौ च संज्ञायाम्** ।३।३।१७४। आशिषि । वातिर्वायुः । शिवो देयादेनं शिवदत्तः ॥ **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८।

---

टिप्प०-१ कथं तर्हि 'मुखाब्जगन्धलब्धेः' इति माघः, 'प्रेक्षोपलब्धिः' इत्यमरश्च ? षित्वादङि लभेत्येव ह्युचितम् । सत्यम् । अनर्थकास्तु प्रतिवर्णमनुपलब्धेरिति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । २ 'न लोका' इति षष्ठीनिषेधात् कर्तरि तृतीया ।

प्राचामिति पूजार्थम्। प्रतिषेधयोरलंखल्वोरुपपदयोः क्त्वा। 'दो दद् घोः'। अलं दत्त्वा। 'घुमास्था' इतीत्वम्। पीत्वा खलु। अलंखल्वोः किम्? मा कार्षीः। प्रतिषेधयोः किम्? अलंकारः॥ **समानकर्तृकयोः पूर्वकाले** ।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा। 'अव्ययकृतो भावे'। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। स्नात्वा भुक्त्वा पीत्वा व्रजति॥ **न क्त्वा सेट्** ।१।२।१८। सेट् क्त्वा किन्न। शयित्वा। सेट् किम्? कृत्वा॥ **रलो व्युपधाद्धलादेः संश्च** ।१।२।२६। इवर्णोवर्णोपधाद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा। व्युपधात्किम्? वर्तित्वा। रलः किम्? सेवित्वा। हलादेः किम्? एषित्वा। सेट् किम्? भुक्त्वा॥ **उदितो वा** ।७।२।५६। उदितः परस्य क्त्व इड् वा। शमित्वा। शान्त्वा। देवित्वा। 'छ्वोः शूडनुनासिके चे'ति ऊठ्। द्यूत्वा। दधातेर्हिः। हित्वा॥ **जहातेश्च क्त्वि** ।७।४।४३। हित्वा। हाङस्तु—हात्वा॥ **समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः। तुक्, प्रकृत्य। अनञ् किम्? अकृत्वा। पर्युदासाश्रयणान्नेह,—परमकृत्वा॥ **वा ल्यपि** ।६।४।३८। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः। स च व्यवस्थितः। **(मान्तानिटां वा)**। **(नान्तानिटां नित्यम्)**। आगम्य, आगत्य। प्रहत्य। अदो जग्धिः। प्रजग्ध्य॥ **न ल्यपि** ।६।४।६९। घुमास्थेतीत्वम्। प्रधाय। प्रमायेत्यादि॥ **आभीक्ष्ण्ये णमुल् च** ।३।४।२२। पौनःपुन्ये द्योत्ये क्त्वाविषये णमुल् क्त्वा च॥ **नित्यवीप्सयोः** ।८।१।४। आभीक्ष्ण्ये वीप्सायां च द्योत्ये परस्य द्वित्वं स्यात्। आभीक्ष्ण्ये तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च। पचति पचति। स्मारं स्मारं नमति गुरुम्। स्मृत्वा स्मृत्वा। पायम् २। भोजम् २। श्रावम् २॥ **अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत्** ।३।४।२७।

---

टिप्प०—१ ननु विकल्पार्थमेवास्तु अलं रुदित्वा अलं रोदनेनेति प्रयोगद्वयसिद्ध्यर्थमिति चेन्मैवम्; वासरूपन्यायेनैतत्सिद्धेः। नच 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति' इति सिद्धान्तात् ल्युटि वासरूपन्यायो नास्तीति वाच्यम्। क्तल्युडादयोऽपवादभूताः स्वबाध्यं नित्यं बाधन्ते इति हि तस्यार्थः। क्रुटोऽपवादः क्त्वा इति वैषम्यात्।

एषु कृञो णमुल्स्यात् सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत्कृञ्[1]। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्। एवंकारम्। कथंकारम्। इत्थंकारं भुङ्क्ते, इत्थं भुङ्क्त इत्यर्थः। सिद्धेति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते॥ यावति विन्दजीवोः।३।४।३०। यावद्वेदं[2] भुङ्क्ते। यावल्लभते तावदित्यर्थः। यावज्जीवमधीते॥ निमूलसमूलयोः[3] कषः।३।४।३४। कर्मण्युपपदे॥ कषादिषु यथाविध्यनुप्रयोगः।३।४।४६। यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्यः। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं कषतीत्यर्थः॥ शुष्कचूर्णरूक्षेषु पिषः।३।४।३५। एषु कर्मसु पिषेर्णमुल्। शुष्कपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः। चूर्णपेषम्॥ रूक्षपेषम्॥ समूलाकृतजीवेषु हन्कृञ्ग्रहः।३।४।३६। कर्मणीत्येव। समूलघातं हन्ति। अकृतकारं करोति। जीवग्राहं गृह्णाति। जीवन्तं गृह्णातीत्यर्थः। करणे हनः।३।४।३७। पादघातं हन्ति, पादेन हन्तीत्यर्थः॥ स्नेहने[4] पिषः।३।४।३८। स्निह्यते येन तस्मिन्करणे पिषेर्णमुल्। उदपेषं पिनष्टि, उदकेन पिनष्टीत्यर्थः॥ हस्ते वर्तिग्रहोः।३।४।३९। हस्तार्थे करणे। हस्तवर्तं वर्तयति। करवर्तम्, हस्तेन गुलिकां करोतीत्यर्थः। हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्॥ स्वे पुषः।३।४।४०। करण इत्येव। 'स्वे' इत्यर्थग्रहणम्। तेन स्वरूपे पर्याये विशेषे च णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोषम्॥ समासत्तौ।३।४।५०। तृतीयासप्तम्योर्णमुल् सन्निकर्षे। केशग्राहं[5] युध्यन्ते। हस्तग्राहं युध्यन्ते॥ स्वाङ्गे तस्प्रत्यये कृभ्वोः।३।४।६१। क्त्वाणमुलौ स्तः। मुखतः-

---

टिप्प०–१ इह शाब्दबोधे विशेषसत्त्वेऽपि फलितार्थकथनपरतया कारमित्यस्य निष्फलत्वमुक्तम्; अनतिप्रयोजनत्वात्। विस्तरस्तु मनोरमादावनुसंधेयः। २ असाकल्यमनेन दर्शयति। साकल्ये हि 'कर्मणि दृशिविदोः' इत्येव सिद्धम्। ३ निर्गतं मूलमस्य निर्मूलं। सह मूलेन समूलम्। निमूलसमूलकषणाभिन्नं कषणमिति शाब्दबोधः। ४ शुष्कचूर्ण इति सूत्रे एव स्नेहनग्रहणं न कृतम्। तत्र हि 'कर्मणि दृशिदृशोः' इति सूत्रात्कर्मणीत्यनुवर्तते। इह तु पूर्वसूत्रात्करण इत्यनुवर्तनीयमिति। ५ केशेषु ग्रहणं भवतु मा वा संनिकर्षप्रतिपादनपरमेतत्।

